व्यञ्जयन्तोऽपि हि प्रत्येकमिमे ध्वनयो न द्रागित्येव स्फुटतरम् स्फोटात्मानमवभासयितुमीशते, अपि त्वारूपमव[1]भासयन्ति। पूर्वपूर्वाभिव्यक्तिजनितसंस्कारसचिवोत्तरोत्तराभिव्यक्तिक्रमेण त्वन्त्यो ध्वनिः स्फुटतर[2] विशिष्टस्फोटविज्ञानमाधत्ते इति, न वैयर्थ्यं द्वितीयादिध्वनीनाम्। नापि पूर्वेषाम्, तदभावे तदभिव्यक्तिजनितसंस्काराभावेनाऽन्त्यस्य ध्वनेरसहायतया व्यक्त्यवभासवाक्यधीहेतुभावाभावात्।

## उक्तार्थस्य दृष्टान्तेन विशदीकरणम्।

तद्यथा रत्नपरीक्षिणः पुनः पुना[2]रत्नतत्त्वमीक्षमाणस्य रत्नदर्शनानि प्रत्येकं रत्नस्वरूपमवगाहमानान्यपि सहसैव न समानासमानजातीयव्यावृत्तं रत्नतत्त्वमवभासयन्ति, किन्तु पश्चपदर्शनजनितभावनासचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति रत्नतत्त्वम्। न च वर्णावभासा मिथ्याप्रत्ययाः तत्संस्कारा वा कथम्, व्यक्ततया परिच्छित्तिहेतव इति साम्प्रतम्। आराद्वनस्पतौ [3]हरितप्रवाहस्य व्यक्ततरंवनस्पतितत्त्वप्रतीतिहेतुत्वदर्शनात्। वर्णाच्च समारोपितदीर्घत्वादिधर्मभाजः पारमार्थिकार्थधीभेदोपलम्भात्।

---

१. आरूपमाभासयन्ति इति मु. पु. पा.।

आरूपमाभासयन्ति-अवभासयन्ति-ईषद्रूपम्-अस्फुटमिति यावत्। तथा चात्र शास्त्रदीपिकायाः सन्दर्भोऽनुसन्धेयः-ननु न कश्चिदपि नादस्वतोऽस्य स्फुटाभिव्यक्तिं करोति, किन्तु सर्वे ते प्रत्येकं व्यञ्जकाः। स तु न द्रागेव स्फुटमवभासते प्रथममस्फुटावभासितः सन् पुनः पुनः श्रूयमाणः स्फुटो भवति-शा. दी. पृ. ९६ इति।

'नादैराहितबीजायामन्त्येन ध्वनिना सह।
आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते॥

वा. प. का. १ श्लो ८५ इति।

स्फुटतरविशिष्टस्फोटबिम्बमाधत्ते इति मु. पु. पा.।

२. रत्नस्वरूपं वीक्षमाणस्य इति मु. पु. पा.।

३. हरितप्रवाहस्य—दूरस्थवृक्षे हरिततृणसमूहज्ञानधारायाः इत्यर्थः।

## उदाहरणमुखेन स्पष्टीकरणम्

तथा हि-लौकिका नग इति गिरिमपदिशन्ति, नाग इति दन्तिनम्, अजिनमिति चर्म, अजीनमिति [1]ज्यानिहीनम्, शुन इति तु कर्मभूतान् सारमेयान्, शून इति तु वृद्धिमापन्नम्। [2]न च ते प्रत्यया भ्रान्तय, व्यवहाराविसंवादात्।

## तत्र शंका-समाधाने

यस्तु स्वतन्त्रसिद्धान्ताभ्यासाहितव्यामोहापस्मारः सार्वजनीनमपि पदमिति, वाक्यमिति चैकविषयमनुभवम[3]वजानीते।

[4]स इत्थं शिक्षणीयः—'वत्स वेत्सि तावच्छब्दादर्थधीरुदीयते'[5] इति॥

सेयं वर्णातिरिक्तैकपदवाक्यानुभवमन्तरेण नोदेतुमर्हति। नो खल्विमां विधातुमुत्सहन्ते वर्णाः, विकल्पासहत्वात्। ते हीमां प्रत्येकं वा विदधीरन्नागदन्ता इव शिक्यावलम्बनम्, मिलिता वा ग्रावाण इव पिठरधारणम्। न तावत्प्रत्येकम्, अनुपलम्भविरोधात्, वर्णान्तरोच्चारणानर्थक्यप्रसङ्गात् च। नापि मिलिताः, तथाभावाभावात्। तथा हि-वास्तवो वा समूह एतेषामाश्रीयते, अनुभवोपाधिको वा। तत्र सर्वेषामेव वर्णानां नित्यतया विभुतया च वास्तवी सङ्गतिरतिप्रसङ्गिनी। केषाञ्चिदेव पदवाक्यभावं नापादयितुमर्हति। अनुभूयमानानान्त्वनुभवानुसारिणी तत्पर्यायेण पर्यायवती न समूहभाग्भवति। न च खल्वेकदेशकालानवच्छिन्नाः समूहवन्तो भवन्ति भावाः, अतिप्रसङ्गात्।

## संस्कारनिरासेन स्फोटस्योपपादनम्

पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यो वर्णः [6]प्रत्याय-

---

१. 'ज्यानिविहीनं' इति मु. पु. पा.। ज्या वयोहानाविति धातोः निष्ठान्तं रूपम्।

२. 'न चैते भ्रान्तयः' इति मु. पु. पा.।

३. 'अपजानीते' इति मु. पु. पा.।

४. 'स इत्थं शिक्षयितव्यः' इति मु. पु. पा.।

५. 'उदयते' इति मु. पु. पा.।

६. (प्रत्यायकोऽर्थस्य) 'तथा च

कोऽर्थस्य तेन तथैवैकानुभवकल्पनेति चेत्। न। विचारासहत्वात्। को नु खल्वयं [1]संस्कारोऽभिमत आयुष्मतः-किं स्मृतिबीजम्, अन्यो वा प्रोक्षणादिभ्य इव व्रीह्यादेः। न तावदन्त्यः। न ह्यसावसहभुवां वर्णानां जन्य एकः सम्भवति, उक्तादेव प्रकारात्। वर्णैर्यथास्वं क्रमविशेषशालिभिरन्येऽन्ये जन्यन्ते संस्काराः, तेषाञ्च स्थेम्ना सम्भव त्यन्त्यवर्णसाचिव्यमभिधेयप्रत्ययजननायेति चेत्।

अहो बतास्य [2]स्वपक्षदृष्टिपक्षपातः, यद्बहुतरादृष्टसम्भारकल्पनाक्लेशमपि न चेतयते, संस्कार एव तावदनुपलब्धपूर्वः, तस्य, च नानात्वमिति। आग्नेयादिवत्कल्पनागौरवं न कल्पकगर्हिततामावहति इति चेत्। न। इहान्यथासिद्धेः। आग्नेयादयो हि विशरारवः— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति चिरभाविने फलाय विहिताः, समिदादयश्च प्रोक्षणादयश्च तदङ्गान्यसहभावीनि इति, बह्वपूर्वकल्पनां विना नोपपद्यत इति, नासौ प्रमाणमार्गागतो दोषमावहति। इह पुनरेकगोचरानुभवमात्रादभिधेयप्रत्ययोत्पत्त्युपपत्तेरप्रमाणिकानेककल्पना न दोषमावहतीत्यचतुरस्रम्।

## वर्णवादिनां मतेन शङ्का तन्निरासश्च

वासनापरनामा संस्कारः स्मृतिबीजमन्त्यवर्णसहकारी, तस्य च स्मरणफलप्रसवोन्नीतसद्भावस्यार्थबीजन्मनि सहकारितामात्रम् कल्पनीयम्, तन्न गौरवमिति चेत्। न। स्वभावविपर्यासानुपपत्तेः, अदृष्टान्तरकल्पनाप्रसङ्गाच्च। तथा हि—यो यद्गोचरानुभवयोनिः संस्कारः, स तत्रैव धियमाधत्त इति, तस्य स्वभावः, यद्यन्यस्मिन्नप्यादधीत। किञ्चिदेवैकमनुभूय सर्वः सर्वमर्थं[3] विजानीयात्। अपि च संस्कार इति च वासनेति च भावनेति च प्राचीनानुभवजनितमात्मनः सामर्थ्यभेदमेव स्मृतिज्ञानप्रसवहेतुमाचक्षते। न[4] चास्यैवार्थ-

---

१. 'अर्थसंस्कारः' इति २. पु. पा.।

२. 'स्वदृष्टिपक्षपातः' इति २. पु. पा.।

३. विजानीयात्—तथा च वर्णस्मरणमेव स्यात्, न त्वर्थस्मरणमिति भावः।

४. अस्यैवार्थप्रत्ययप्रसवशक्तिः—'संस्कारस्यैव शक्तिरूपत्वेन' तत्र शक्त्यन्तरकल्पनानवकाशात् इति भावः।

प्रत्ययप्रसवशक्तिः शक्या कल्पयितुम्। सा खल्वभिधेयधीप्रसवोन्नीतसद्भावा फलवत्यात्मन्येव युक्ता कल्पयितुम्। न पुनरतद्वत्यामस्य स्मृतिजननशक्तौ[1]। यथा खल्वियं मानान्तरसिद्धा, एवमसावपि। न चात्मनि शक्तिकल्पनायां[2] सा च, तस्याश्चान्या, अशक्तायाः कार्यकरत्वाभावादिति शक्त्यन्तरकल्पना, न तु स्मृतिप्रसवशक्ताविति साम्प्रतम्। न हि कल्प्यमाना शक्तिः शक्त्यन्तरयुक्ता कल्प्यते, तन्मात्रादेव सम्भवे शक्त्यन्तरकल्पनायामनवस्थापातात्, स्मृतिप्रसवशक्तावपि च साम्यासाम्यात्[3]। तथा चादृष्टान्तरं नाम परिकल्पनीयमिति। तदेवं[4] महद्गौरवमापन्नमिति।

[18]तावत्स्मृ[5]तिसमारोहिणो वर्णा वाचकाः, ततो न गौरवमिति चेत्, न[19], अक्रमानुक्रमविपरीतक्रमाणां[6] तत्राविशेषेणार्थधीसमुत्पादप्रसङ्गात्। अथापि स्यात् ये यथास्वं वर्णानुभवैराहिताः संस्काराः, ते सम्भूय निखिलवर्णविषयमेकमेव स्मरणफलं प्रसुवते, तदारोहिणो[7] वर्णा अव्यवधाना अभिधेयधियमादधति। न चैकैकवर्णो-

१. स्मृतिजननशक्तौ—'बोधरूपफलरहितायां शक्तौ संस्कारस्य स्मृतिजनकत्वमनुपयोगात्कल्पयितुं न युक्तमित्यर्थः।'

'स्मृतिजननम्' इति २ मु. पु. पा.।

२. शक्तिकल्पनायां सत्यां तस्याश्चाशक्तायाः कार्यकरणाभावाच्छक्त्यन्तरकल्पना इति मु. पु. पा.।

३. 'साम्यात्' यथा वा अदृष्टान्तरं मा नाम कल्पनीयमिति तदेव गौरवमापन्नम्' इति मु. पु. पा.। तथा चादृष्टान्तरं नामेति २ पु. पा.।

४. गौरवं शक्तिरूपे संस्कारे शक्त्यन्तरकल्पनारूपमित्यर्थः।

५. 'स्मृतिसमारोहिणो वर्णा वाचकाः, तन्न गौरवमिति चेत्' इति मु. पु. पा.।

६. 'क्रमाक्रमविपरीतक्रमाणां' इति मु. पु. पा.।

७. 'तदुपारोहिणो वर्णाः' इति मु. पा.।

18 वर्णवादिनां सिद्धान्तान्तरं दूषयितुमनुवदति—तावत्स्मृतीति।

19 अनूदितमर्थं दूषयति—नेति।

पलब्धिप्रतिलब्धजन्मानः संस्काराः प्रतिवर्णगोचरास्तावतीरेव [1]तत्क्रमवतीस्स्मृतीरपि[2] भावयितुमीशते। तत्र तत्र निरपेक्षाणानां[3] कारणभावोपलम्भात्। न पुनरखिलवर्णगोचरमेकमिति[4] रमणीयम्; तत्र तत्र अनपेक्षाणां कारणत्वेऽपि मिलितानामप्येक (प्यनेक)-गोचरैकविज्ञानजननदर्शनात्।

तथा हि—संस्काराश्चक्षुराद्यनपेक्षाः[5] स्मरणकारणम्, चक्षुरादयश्च तदनपेक्षा आलोचनकारणम्, प्रत्यभिज्ञाने तु संस्कारापेक्षाश्चक्षु-रादयः कारणमिति, अवश्यं तत्र तत्रोहनीयमिति, न कदाचिददृष्टकल्प[6]-नेति।

तन्नास्ति, क्रमयुक्तेभ्य[7] इव युगपद्विपरीतक्रमयुक्तेभ्योऽप्यभिधेय-प्रत्ययप्रसंगात्। न खल्वेकोपलब्धिवर्तिनामस्ति कश्चिद्विशेषो वर्णा-नाम्। न हि वास्तवः क्रमो नित्यानां विभूनाम्, तेषामुपलब्धिनिमि-त्तत्वमाश्रीयते, सा चेदेका, कुतस्त्यस्तर्हि क्रम एषाम्?

---

१. 'तावतीरेव क्रमवतीः' इति मु. पु. पा.।

२. 'स्मृतीर्भावयितु' मिति मु. पु. पा.।

३. निरपेक्षाणां—'कारणत्वेऽपि भावोपलम्भात्' इति २. पु. पा.। 'संस्कारान्तरनैरपेक्ष्येण प्रत्येकं संस्काराणां कारणत्वेन स्मृति-रूपफलदर्शनादित्यर्थः।'

'निरपेक्षकारणभावोपलम्भात्' इति मु. पु. पा.।

४. 'अखिलवर्णगोचरं स्मरणमेकमिति' मु. पु. पा.।

५. 'संस्कारश्चक्षुराद्यनपेक्षः स्मरणकारणम्, चक्षुरादयस्तन्निरपेक्षाः आलोचनकारणम्। प्रत्यभिज्ञाने तु संस्कारसापेक्षाः चक्षुरादयः। एवं तत्र तत्रोहनीयमिति न काचिददृष्टकल्पनेति इति मु. पु. पा.।

६. अदृष्टकल्पनेति नास्ति मु. पु. पा.। तथा च सकलवर्णविषयकमेकं स्मरणं सम्भवतीति भावः। एतावत्पर्यन्तमाक्षेपः, उत्तरस्तु परिहार इति।

७. क्रमाभिव्यक्तेभ्य इव यौगपद्यविपरीतक्रमाभिव्यक्तेभ्यः' इति मु. पु. पा.।

[1]न च प्राचीनप्रत्येकवर्णानुभवनिचयवर्तिनी परापरतापि प्रभासत इति साम्प्रतम्। वर्णस्वरूपमात्रगोचरतया स्मृतिरियं न [2]तदनुभवानपि गोचरयितुमर्हति, प्रागेव तत्परापरतामिति, युगपद्विपरीतक्रमाभिव्यक्तानामनुक्रमाभिव्यक्तेभ्यो विशेषाभावादेकोपलब्धौ सर्वार्थप्रत्ययप्रसङ्गः।

तस्मात्स्वसिद्धान्तव्यामोहमपहायाभ्युपेयता[3]मनुसंहारबुद्धेरेक-[4]पदवाक्यगोचरता। न चास्या गोचर इव प्रत्येकध्वनिव्यञ्जनीयः तदर्थोऽपि प्रत्येकवर्णव्यञ्जनीयः इति साम्प्रतम्। प्रथमादेव वर्णादभिधेयधीसमुत्पादादानर्थक्यं द्वितीयादीनामित्युक्तम्। न चैतत्पदेऽपि तुल्यम्। तस्य हि प्रत्यक्षस्य प्रतिध्वनिव्यञ्जनीयस्याभिव्यक्तितारतम्यम् नानाध्वनिष्वायतत इति, नानार्थक्यमुत्तरेषाम्। न चेयमप्रत्यक्षेऽभिधेये विधा सम्भाविनी। [5]प्रत्यक्षगोचरोऽपि (ह्यभिव्यक्ति) तारतम्यभाक् न मानान्तरगोचरः। स खलु गृह्यते वा, न वा, न पुनर्व्यक्तोऽव्यक्तश्चेति

तदिदमसमञ्जसम्। तथा हि--चक्षुषी निमील्य डिण्डिमरागं परित्यज्य निरूपयत्वत्रभवान् पूर्वा बुद्धीरेकैकवर्णगोचराः, उत्तराश्च विशदपदवाक्यावगाहिनी[6], किमेता गादिबुद्धयो गकारादिमात्रनिर्भासाः, आहोस्वित् गकाराद्याकारं किञ्चिदेवमनाकारमासु सम्प्लवते मुखमिव मणि-कृपाण-दर्पणादिषु विभिन्नवर्णपरिमाणमप्येकम्।

---

१. प्राचीनप्रत्येकवर्णानुभवनिचयमनुवर्तनीयं परापरता प्रतिभासत इति साम्प्रतम्, इति मु पु पा।

२. तत्तादनुभवानपि गोचरयितुमर्हति तत्परापरतां तु प्रागेवेति युगपद्विपरीतक्रमाभिव्यक्तानां क्रमाभिव्यक्तेभ्यो विशेषाभावादेकोपलब्धौ सर्वेषामर्थप्रत्यायनप्रसङ्गः। इति मु. पु. पा.।

३. अभ्युपेतां–अभ्युपेयतां, इति ३ पु. पा.।

४. 'अनुसंहारबुद्धिरेकपदवाक्यगोचरा' इति मु. पु. पा.।

५. प्रत्यक्षगोचरो हि—'प्रत्यक्षगोचरो ह्यभिव्यक्तितारतम्यभाग् न मानान्तरगोचरः स खलु' इति ३ पु. पा. श्लिष्टः। २ पु भाग् मानान्तरगोचरः। न खल्विति पा.।

६. उत्तरां च विशदपदवाक्यावगाहिनीं' इति मु. पु. पा.।

इतरथा हि तत्र सुखमिति बुद्धिव्यपदेशावभिन्न[1]वस्त्ववगाहिनौ न स्याताम्। न सम्प्लवते चेद् गादय एव परस्परं[2] नानात्मानः प्रकाशन्ते, न पुनस्तदाकारं पदतत्त्वमेकं प्रकाशत इति सिद्ध्यति। न जातु[3] गज-गवय-करभ-रुरवः परस्परव्यतिभिद्यमानमूर्तयो भासमाना रासभादि-विवर्ता भवन्ति। सम्प्लवते चेद्-अस्ति[4] तर्हि गकारादिषु भिन्नेष्व[5]-प्यभिन्नवस्तुनिर्भासा शब्दः शब्द इति प्रख्या लौकिक-परीक्षकाणाम्।

तत्किं शब्दत्वमेव वाचकमभिधेयभेदानाम्। तथा च तस्य सर्व-त्रा[6]विशेषात्सर्वेऽर्थाः सर्वशब्देभ्यः प्रतीयेरन्। न खलु कारणानियमे कार्यभेदनियमो भवितुमर्हति, तस्याकस्मिकत्वप्रसङ्गात्। [7]गकाराद्या-कारभेदविवर्त[8] शब्दत्वमभिधेयभेदानामभिधायकं, तन्नातिप्रसङ्ग इति चेत्। न। प्राप्ताप्राप्तविवेकेन गादीनामेवाभिधेयधीहेतुभावात्[9]। अन्य-था सत्त्वगुणत्वादीनामपि तत्प्रसङ्गात्। अत्यल्पमिदं, अखिलमेव कार्यजातं[10] सत्त्वसामान्यनिर्माणं प्रसज्येत।

अपि च शब्दत्वं चरमविज्ञान इव पूर्वेष्वपि प्रत्ययेषु प्रथत इति, नास्ति तिरोहितमिव किञ्चनेति तेभ्योऽप्यर्थप्रत्ययप्रसङ्गः। एतेन वर्णत्वमपि परास्तमभिधेयधीहेतुभावेनेति[11] वेदितव्यम्।

---

१. 'अभिन्नवस्तुग्राहिणौ' इति मु. पु. पा.।

२. 'परस्परानात्मानः' इति मु. पु. पा.।

३. गजगवयहयरासभरुरवः इति मु. पा.।

४. 'अस्ति हि गकारादिषु' इति मु. पा.।

५. 'भिन्नेष्वभिन्न' इति मु. पा.।

६. 'सर्वस्याविशेषात्' इति मु. पा.।

७. 'गकाराद्याकारविवर्तभेदं शब्दत्वमभिधेयभेदाभिधायकं' इति मु. पु. पा.।

८. शब्दत्वम्—'भेदशब्दमिति २ पु. पा.। गकाराद्याकारैरा-रोपितैर्भिद्यमानः शब्दो यत्र तादृशम्। पदं वाक्यं वेति तस्यार्थः।'

९ 'हेतुत्वात्' इति मु. पा.।

१०. 'कार्यसामान्यजातं' इति मु. पा.। 'सामान्येति ३ पु. नास्ति'

११. 'हेतुभावेन वेदितव्यम्, इति मु. पा.। वर्णत्वमे-केषांचित् शब्दत्वस्य समुद्रघोषादौ व्यभिचारात् वर्णत्वमे-वार्थधीहेतुभावं भजत इति वदतां मतं निरस्तमिति बोध्यम्।

तदिह कृतं कृतधियामप्रामाणिकेन शब्दत्वसामान्यनिराकरणेन। नच शब्दत्वमेकं वस्तु सत्, गकारादिनानात्वभाविकत्वविरोधि, येन तद्भाविकत्वाय[1] शब्दत्वमपाक्रियते। शालेयादिभेदव्यवस्थापनाय गोत्वादेरपि सामान्यस्यापाकरणप्रसङ्गात्। [2]शाबलेयादिषु भिन्नेषु गौरित्येकावभासादशक्यापह्नवमिति चेत्; न। इहापि समानत्वात्। नो खल्वक्षु[3] व्यञ्जनेषु च शब्दः शब्द इत्येकनिर्भासनमतिः[4] नाविरस्ति लौकिकपरीक्षकाणाम्। न चैषा श्रोत्रग्रहणोपाधिर्विनापि[5] शब्दत्वमेकमिति साम्प्रतम्। तद्ग्रहणानामपि नानात्वेनैकप्रत्ययसमुत्पादासामर्थ्यात्। श्रोत्रस्य[6] चात्यन्तपरोक्षतया [7]तत्प्रतीतेरग्रहे शब्दः शब्दः इत्येकावभासप्रकाशानुपपत्तेः। अगृहीतस्योपाधेरुपहितप्रत्ययाधानासहत्वात्[8]। न च गकारादिष्वनुस्यूतमश्वादिपदस्यावृत्तमेकैकवर्णावगाहिनीषु प्रख्यासु तिरोहितमिव प्रथते। किं[9] न प्रथते यदा विशदपदावभासिनि गौरित्येकं पदमिति चरमे चेतसि चकास्ति पूर्वोपलब्धभागप्रतिसन्धानवतीति। न चास्यैते भागा इत्यायुष्मतैवोपपादितम्। अतस्तद्विवर्ताः।

तथा च तदेव तेनतेनापरमार्थसता गकाराद्याकारेण प्रतिभासत इति प्रमाणमार्गागतम्।

---

१. भाविकत्वाय–'गत्वादेर्वस्तुत्वसिद्धये'।

२. 'शाबलेयादिभेदेषु गौर्गौरित्येकाकारावभासादशक्यापह्नवम् तदिति चेत्' इति मु. पा.।

३. 'नो खल्वचि' इति मु. पा.।' अक्ष्विति २ पु. पा.।

४. 'एकनिर्भासः प्रकाशो नास्ति' इति मु. पा.।

५. 'विनापि शब्दत्वमेकमिति साम्प्रतम्' इति मु. पा.।

६. 'श्रोत्रग्राह्यत्वोपाधिश्च' इति मु. पु. पा.। श्रोत्रस्य चेति ३ पु. पा.।

७. 'तद्गृहीतिविरहे शब्दः शब्द इत्येकनिर्भासप्रकाशानुपपत्तेः। इति मु. पा.।

८. 'प्रत्ययाधानासामर्थ्यात्' इति मु. पा.।

९. 'कथं न प्रथते यदा विशदपदावगाहिनि गौरित्येकं पदमिति चरमे चेतसि पूर्वोपलब्धिभागप्रतिसन्धानमस्ति' इति मु. पा.।

## शाब्दिकमतेन परिहारवर्णनम्

तत्किमिदानीमनुसंहारबुद्धिप्रतिसन्धानापेक्षाः प्राञ्चः प्रत्ययाः यथास्वं गकाराद्यनुविद्धमेकमवभासयन्ति ? ओमिति चेत्[१]। न। तत्र-तत्र चरमविज्ञानसमये प्राचां प्रत्ययानामतिवृत्तत्वात्, तत्काले[२] चरमस्य चेतसो[३]ऽनागतत्वादुपकुर्वन्त्यसन्तो वा सतोऽसतो वेति वतापतितम्। अपि च जन्ममात्रव्यापारत्वेन विज्ञानस्य जातस्य[४] जन्माभावेन चिरस्य व्यापारायोगः, तद्विपरीतं चाभ्युपेतम्[५]।

अनपेक्षाश्च[६] प्राञ्चः प्रत्ययाः स्तम्भकुम्भाम्भोरुहाद्यवगाहिन इव अभिन्नानुव्याधविरहिताः[७] स्वानुभवाद्भासमानाः न परस्परं स्व-गोचरं[८]संभिन्दन्ति।

नाप्यननुभाविकः प्रत्ययेष्वेकानुव्याधः शक्यानुमानः, नरविषाण-वदनुपलब्धिविरोधात्।

तथा च परस्परव्यावृत्तवर्णमात्रगोचरा अनुभूतयो भावनोप-जननद्वारा नाना वा एकं वा स्मृतिप्रत्ययं स्वगोचरं एवादध-

---

१. 'ओमिति चेत् 'हन्त तत्र तत्र' इति मु पा।

२. तत्काले—'आद्यवर्णज्ञानकाले। चरमनादाभिव्यञ्जनीयस्य स्फोटस्याऽऽद्यवर्णप्रत्ययकालेऽसत्त्वादसत उपकार्यत्वम्, चरमवर्णकाले चाद्यानां नाशादसत उपकारकत्वं चापद्यत इत्यर्थः'।

३. 'अनुवृत्तत्वादुपकरोति असतामसन्निति चैवमापतितम्' इति मु. पा.।

४. 'ज्ञातस्य' इति ३ पु पा।

५. अभ्युपेतम्—ज्ञानानामुत्पत्त्यैवार्थप्रकाशकत्वात् तृतीयक्षणे नाशाच्च प्रथमवर्णज्ञानस्यास्फुटपदत्वाभिव्यञ्जकत्वम्, चरमवर्णज्ञान-साचिव्येन तस्यैव स्फुटाभिव्यञ्जकत्वमिति न युक्तमिति भावः।

६. अनपेक्षाः—'अनुसंहारबुद्धिप्रतिसन्धाननिरपेक्षाः। समुदाय-बुद्ध्यसहकृता इत्यर्थः।

७. 'विरहिणः' इति मु पा।

८. न भिन्दन्ति—न व्यावर्तयन्ति। यथा च गो-गवय-गोतादिप्रत्य-येष्वाद्यप्रत्ययैरस्फुटत्वेनेष्टा अपि परस्परव्यावृत्तारूपगवादिपदस्फोटा-भिव्यक्तयोऽनुपपन्ना इति भावः।

त्सन्ति, नान्यगोचरे. नान्यगोचर इत्य नुसंहारबुद्धिरपि परस्परव्या-[2]वृत्तवर्णतयाऽवगाहिनो, न तु वर्णानुग्राधवदेकपदगोचरेत्यनुभवमार्गायातम्।

कथ[3]मायातम्? यथा—गौरित्येकमिदं पदमित्येकपदावभासिनी धीरस्ति लौकिकपरीक्षकाणाम्। न चेयमनालम्बना, नापि वर्णालम्बना; तेषां नानात्वात्।

न[4] च सेनावनवत् औपाधिकी। उपाधिः खल्वेकविज्ञानविषयता वा भवेत्, एकाभिधेयप्रत्ययहेतुता वा। न तावत् पूर्वः पक्षः, अप्रतीतोपाधेरुपहितप्रत्ययायोगात्। स्वसंवेदनं संवेदनमनिच्छतामनुसंहारबुद्ध्या [5]स्वरूपाग्रहणात् तदेकत्वाग्रहात् तदुपाध्येकपदप्रतिभासानुपपत्तिः।

उत्तरस्मिन्नपि पक्षे परस्पराश्रयप्रसक्तिर्दुर्वारा। नखल्वविदितपदरूपावधिरर्थमवैति। अवध्यन्तरपरिग्रहे तत्रेऽपि वर्णानां [6]तदर्थभेदानध्यवसायात्। तत्रार्थप्रतिपत्त्या पदरूपविशेषमुपकल्पयतः दुरुत्तरमितरेतराश्रयं प्रसज्येत। न चैकार्थसम्बन्धाख्यानमेकपदत्वमापादयति। वर्णानामनाश्रितपदरूपाणामप्रत्यायकत्वेनासम्बद्धानां[7] सम्बद्धाख्यानानुपपत्तेः। सम्बन्धाख्यानात्तु पदभावे तदेवेतरेतराश्रयत्वमापद्यते। पदत्वाद्धि सम्बन्धित्वे सत्याख्यानम्, आख्यानाच्च पदत्वे सति सम्बन्धितेति। व्यवस्थितं हि वाचकत्व-

---

१. अनुसंहारबुद्धिरपि—'समुदायात्मकपदस्वरूपज्ञानमपीत्यर्थः।

२. 'व्यावृत्तवर्णरूपावगाहिनी एकगोचरेत्यनुभवमार्गागतम्' इति मु. पा।

३. 'कथ गौरित्येकं पदमित्येकपदावभासिनी' इति मु पा।

४. नापि सेनावनादिवत् इति मु. पा।

५. स्वरूपाग्रहणात्—'ज्ञानेन स्वस्याविषयीकरणात् तस्यानुव्यवसायग्राह्यत्वात्, ज्ञाततालिङ्गानुमेयत्वाद्वेति भावः।

६. तदर्थभेदानध्यवसायात्—'पदत्वमनपेक्ष्य समुदायत्वादिधर्मान्तरपुरस्कारेण पदज्ञानेऽपि अर्थानां व्यावृत्तानामनुपस्थितेः। सामान्यतः पदत्वज्ञानेनार्थत्वेनार्थोपस्थितिः स्यादपीति भावः।

७. असम्बन्धानां सम्बन्धाख्यानानुपपत्तेरिति ३ पु पा।

माख्यायते। अपि च एकावभासस्य प्रत्ययस्यौपाधिकत्वमिच्छतः न किञ्चिदेकं भवेत्, सर्वत्रैव कथञ्चित् कस्यचिदुपाधेः सम्भवात्। तथा च नानापि न स्यात्, एकसमाहारात्मकत्वान्नानात्वस्य।

## स्फोटवादस्य (प्रथमपक्षस्य) निरासः

अत्र ब्रूमहे–न वयमेकावभासप्रत्ययमेकवस्तुव्यवस्थितौ प्रमाणयामः; किन्तु व्यपदेशमात्रम्। भवति हि [1]करि-तुरग-रथ-पदातिषु, चम्पकाशोक-किंशुकादिषु च नानात्वेऽपि कञ्चिदुपाधिमाश्रित्य व्यपदेशो लौकिकानाम्—सेनेति, वनमिति च। [2]न च तत् सेना वनं वा करिचम्पकाद्यनेकसमवाय्येकोऽवयवी प्रसिद्ध्यति। तथैव गकारादयोऽपि पूर्वोपलब्धिविपरिवर्तिनो रूपाद[3]न्यूनाधिकाः एकस्यामेव स्मृतौ प्रथमानाः सत्यपि पदमिति व्यपदेशाभेदे नैकानुव्याधवन्तः भवितुमर्हन्ति।

उपाधिविरहात् एकानुव्याधमुपकल्पयति व्यपदेशभेद इति चेत्। न। इतरेतराश्रयापत्तेः। एकानुव्याधवती हि प्रख्या तादृशव्यपदेशोत्पादिनी, [4]बुद्धिनिबन्धनत्वात् व्यपदेशस्य। ततस्तु तामर्थयमानो [5]व्यक्तमन्योन्याश्रयमावहति।

न चात्रोपाधिविरहोऽपि। अस्ति खल्वेकाभिधेयधीहेतुभावः[6] त्रयाणामपि वर्णानामेकस्मरणसमारोहिणां आनुगामिवैकपिठरधारणे, यस्मात् पदमिति व्यपदेशः। न चैवमन्योन्याश्रयम्। न हि पदावधारणाधीनः सम्बन्धबोधः, किन्तु तदधीनं [7]पदज्ञानम्।

---

१. करितुरगादिष्वश्वत्थचम्पकाशोकखदिरधवकिंशुकादिषु नानात्वेऽपि कथञ्चिदेकमुपाधिमाश्रित्य सेना वनमिति व्यपदेशमात्रम् लौकिकानामिति मु. पा।

२. न चैतावता सेना वनं वा करिचम्पकाद्यवयवसमवाय्येकमवयवि प्रसिद्ध्यतीति मु. पा।

३. 'अन्यूनानधिकाः' इति मु. पा।

४. (बुद्धिनिबन्धनत्वात्)—बुद्धिनिमित्तत्वादिति ३ पु पा।

५. 'व्यक्तमितरेतराश्रयत्वमाविशति' इति मु. पा।

६. 'अभिधेयधीहेतुभाव' इति मु. पा।

७. 'पदविज्ञानं' इति मु. पा।

[1]कारकभेदाभिधायि हि पदम् पद्यतेऽनेनेति व्युत्पत्त्या। तच्छब्दाश्च [2]कार्यसम्बन्धोपहितसीमानो नासति तस्मिन्प्रवर्तितुमीशते। न[3] च स्वरूपभेदस्तादृशस्तावतां वर्णानां वर्णान्तरेभ्यो वा[4]ऽतावद्भ्यः तावद्भ्यो वाऽतादृग्भ्योऽन्त्यविज्ञानोपरोहिणामर्थप्रत्ययात् प्राक् न प्रथते।

येन सम्बन्धिभेदाग्रहे न सम्बन्धिभेदो निरूप्येत। प्रकारान्तरवद्भ्यस्तु तेभ्यः तेषामेव चरमविज्ञाननिवेशिनां विशेषमग्रे [5]वक्ष्यामः। तथा[6] च सम्बन्धबोधनाख्यानमप्यमीषामीषत्करम्। समवधृतैकाभिधेयधीहेतुभावानां च पश्चात्तेषां 'पदम्' इति व्यपदेशो नानुपपन्नः।

अपि चानंशस्य वैशद्यावैशद्ये न युज्येते। सामान्य[7]विशेषतद्वतःमनुभूयमानता हि वैशद्यम्, सामान्यमात्रस्य विशेषमात्रस्य वा वेदनमवैशद्यम्। न च निखिलसामान्यविशेषविरहिणः स्फोटस्य-

---

१. 'कारकभेदाभिधायि हि पदपदं' इति मु. पा। 'कारकभेदाभिधायी' ति ३ पु पा। कारकविशेषाभिधायकमित्यर्थः।

२. 'कार्यसम्बन्धबोधोपहितसीमानः' इति मु. पा। कार्यो यः सम्बन्धबोधः, तेन प्रापिता पदभेदरूपा सीमा अवधिर्येषां तादृशाः इत्यर्थः।

३. 'न च स्वरूपभेदस्तावतां तादृशां वर्णानां वर्णान्तरेभ्यः तेभ्य एव वाऽतावद्भ्यस्तावद्भ्यो वाऽतादृशेभ्योऽन्त्यविज्ञानोपारोहिणां' इति मु. पा।

४. (अतावद्भ्यस्तावद्भ्यो वा)– भिन्नानुपूर्वीकेभ्यः। अर्थज्ञाननैरपेक्ष्येणैव नदीदीनादिपदेषु स्वरूपभेदः प्रत्यक्षसिद्ध एवेति भावः,।

५. 'वक्ष्यामः' इति मु. पु. पा.। ६. 'तथा सम्बन्धबोधनाख्यानमप्यमीषामीषत्करं समधिगतैकाभिधेयधीहेतुभावानां च तेषां पश्चात्पदमिति व्यपदेशो नानुपपन्न इति मु. पु. पा.

७. सामान्यविशेषतत्त्वाभ्यां अनुभूयमानता हि वैशद्यम्। सामान्यमात्रस्य तद्वन्मात्रस्य वा वेदनमवैशद्यम्। न च निखिलसामान्यविशेषविरहिणः स्फोटस्यास्फुटंदर्शनमुपपद्यते।' इति मु. पु. पा.।

अस्फुटस्य दर्शनमुपपद्यते। स[1] खलूपलभ्येत, न वोपलभ्येत। न ह्यस्य दृश्यमानस्यास्ति किञ्चिददृश्यमानम्। न चास्ति सम्भवः—स[2]एव तेनैव तदैव दृश्यते, न दृश्यते चेति।

अत एव न समारोपः, सर्वथाऽननुभूते तदयोगात्। कथञ्चिदनुभवे[3] निरंशत्वानुपपत्तेरपसिद्धान्तप्रसङ्गात्। तस्मादनवयवमेवानुभूयते यदतत्त्वमेकमिति रिक्तं वचः।

अत एव च 'शब्दादर्थं[4] प्रतिपद्यामहे' इति वन्ध्यापत्येतिवदनुपपन्नार्थं वचनम्, अनुभवाभावात्। अनुभव एव हि प्रमाणमार्गगतो लोकः, [5]तत्त्वावलोकनात्। न [6]पुरुषप्रवादमात्रम्, वृथावादोऽपि हि सम्भवति वटयक्षवत्। यदि त्ववश्योपपादनीयम्, ततो वरं शब्द[7]शब्दलक्षितानां वर्णव्यक्तीनामेकस्मृतिसमारूढानामेकाभिधेयप्रत्ययोपजननलब्धसहभावानामभिन्नकारका[8]वस्थोपपादिताभेदानामेकत्वादेकवचनमुप[9]पन्नार्थं गोशब्दा[10] दिति। न च 'धवखदिरपलाशावृक्ष[11]'

१. 'स खलूपलभ्यते, नोपलभ्यते। न ह्यस्य दृश्यमानस्यास्ति किञ्चिददृश्यमानम्। नचास्ति सम्भवः। स एव तेनैव तदैव दृश्यते न चेति' इति मु. पु पा.। 'न खलूपलभ्यते न वोपलभ्यते' इति ३ पु. पा. 'नोपलभ्यते वेति विकल्पे वक्ष्यमाणं दूषणद्वयं योजनीयम्—इति।

२. (स एव)—अत एवेति मु. पु. पा.।

३. कथञ्चिदनुभवे—'एकदेशावच्छेदेन प्रत्यक्षत्वाङ्गीकारे' इत्यर्थः।

४. शब्दार्थमिति ३ पु. पा.। 'प्रतिपद्यामहे इति सपिशाचवटेतिह्यवदनुपपद्यमानार्थवचनमिति' मु. पु. पा.।

५. 'लोकस्वत्वावलोकनात्' इति मु. पु. पा.। 'लोकैरविसंवादेन तत्र प्रामाण्याङ्गीकारादिति तदर्थः।

६. 'न पुनः पुरुषप्रवादमात्रम्, मृषावादोऽपी' ति मु. पु. पा.।

७. 'शब्दोपलक्षितानां' इति मु. पु. पा.

८. 'अवस्थापादिता' इति मु. पु. पा.।

९. उपपन्नार्थम्—उपपन्नमिति मु. पु. पा.।

१०. (गोशब्दादिति)—'गोशब्दादित्येकवचनमुक्तक्रमेणैकत्वव्यवहारमात्रोपपत्तेरुपपन्नार्थकमित्यर्थः।

११. 'धवखदिरपलाशा वृक्षः'। 'धवादिषु वनत्वं प्रत्येकं न पर्याप्नोति, वृक्षत्वं तु पर्याप्नोतीति विशेषाद्वनमिति एकवचनमेव, वृक्षा इति

इति न दृश्यते लोक[1] इति, दृश्यमानमेतदपह्नवमर्हति। दर्शनादर्शनयोर्लोकसिद्धत्वेन तुल्यतया बाध्यबाधकभावेन [2]विषयव्यवस्थोपपत्तेः।[20]

न [3]चाप्रत्यक्षमर्थंधीकार्येण शक्यानुमानम्[21] अन्योन्याश्रयात्। न खलु सत्तामात्रेण शब्दोऽभिधेयधियमाधातुमर्हति, [4]शाश्वततया नित्यमाधानप्रसङ्गात् इति, स्व[5]ज्ञानेन तद्धेतुरेषितव्य इति। स्वज्ञानञ्च अस्यार्थप्रत्ययलक्षणलिङ्गप्रभवमिति, प्राप्तमन्योन्य[6]संश्रयम्।

## वार्तिकावष्टम्भेनोक्तशंकानिरासेन स्वमतोपस्थापनम्

अपि च वर्णेभ्यो नाभिधेयप्रत्ययो नोपपद्यते[7]। ते हि गौरिति सामस्त्येन स्मृतिबुद्धावेकस्यां विपरिवर्तमाना अभिधेयप्रत्यय-

---

बहुवचनमेव यथा, तथा प्रकृतेऽपि शब्दत्वस्य प्रकृतपर्याप्ततया शब्दाः इति बहुवचनमेव युक्तम्, न त्वेकवचनमित्याक्षेपाशयः।

१. 'लौकिकत्वेन' इति २. पु. पा.।

२. (विषयव्यवस्थोपपत्तेः)–यथा तैलत्वस्य प्रतिबिन्दु पर्याप्तत्वेऽपि कदाचित् प्रस्थमात्रेऽपि तैलमित्येकत्वव्यवहारः, कदाचित्तु 'तैलानि हेमन्ते सुखानी' त्यादिव्यवहारश्च लोकसिद्धत्वेन न विरुद्धः, तथेहापीति भावः।

३. 'चाप्रत्यक्षमप्यर्थम्'–इति मु. पु. पा.।

४. 'सत्ताया अभिधायकत्वे, तस्याः शाश्वतिकतया' इति मु. पु. पा.

५. अतश्च स्वज्ञानं इति मु. पु. पा.।

६. 'अन्योन्याश्रयम्' इति मु. पु. पा.।

७. 'प्रत्ययो नोपपद्यते। ते हि गौरिति स्मृतिबुद्धावेकस्यां विपरिवर्तमाना अभिधेय' इत्ययं भागः २ पु. नास्ति।

८. 'ईशते' इत्यस्मात्परं २ पु. पाठे 'वर्णमात्रेणोपस्थितौ न समर्था लोकाः, इति शेषः'

---

20 विषयव्यवस्थोपपत्तेः-दर्शनादर्शनयोरुभयोरपि लौकिकत्वेन-लोकसिद्धत्वेन समानबलत्वात् बाध्यबाधकभावेन रूपेण विषयव्यवस्था, तत्र परगोचरे एव बाध्यत्वं स्वगोचर एव बाधकत्वमित्येवमुपपद्यत इति।

21 एवं मीयमानपरित्यागः, इत्यादि कारिकापूर्वार्धं व्याख्याय, पश्चार्धं व्याख्यातुमारभते- न चाप्रत्यक्षं शक्यानुमानमिति।

स्येशते। न चास्यां[1] क्रमाक्रमविपरीतक्रमानुभूतानामविशेषो वर्णानाम्। तथा हि–प्राचीनानुभवभावितभावनानिचयलब्धजन्मा स्मृतिरनुभवानुसारिणी तद्गोचरानक्रमानपि तत्क्रमेण क्रमवदनुभवकर्मतोपसृष्टानपर्यायमपि समाकलयन्ती अक्रमविपरीतक्रमानुभूतेभ्यः भिनत्ति। दृश्यते हि नदीदीनेति स्मृतिधियोरभेदेऽपि वर्णरूपाणाम् विशदतरः पदभेदः। न चेदमनवयवपददर्शनमिति निवेदितम्। तदनुभवकर्मताक्रमपर[2]मवशिष्यते। सोऽपि न्यूनातिरेकादिवदेकपदभेदावधारणोपायः। यथाऽऽहुरत्रभवन्तो वार्तिककाराः–

'पदावधारणोपायान्बहूनिच्छन्ति सूरयः।
क्रमन्यूनातिरिक्तत्वस्वरवाक्य, श्रुतिस्मृतीः॥ इति॥

( श्लो० वा०७ अ-१८० )

न च निरन्तरमतिसदृशस्वरबहुवक्तृप्रयुक्तेष्वानुपूर्व्यवत्सु समानस्मृतिबुद्धिसमारोहिष्वर्थप्रत्ययादर्शनाद् व्यभिचार इति साम्प्रतम्, [3]एकवक्तृप्रयुक्तत्वेन विशेषणात्।

यथाहुः–

'यावन्तो यादृशा ये च पदार्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥,

(सं० आ० परि ६६) इति॥

यथा वा–

'तेषां च गुणभूतानां अर्थप्रत्यायनं प्रति।
साहित्यमेकवक्त्रादि क्रमश्चापि विवक्षितः॥'

(स्फो० श्लो ७०) इति॥

न चैतत्कलकलश्रुतावशयज्ञानम्। किमिव हि दुष्करमभ्यासस्य। यदाहुः—

'परेषामनुपाख्येयमभ्यासादेव जायते।
मणिरूपादिषु ज्ञानं तद्विदामानुमानिकम्॥'

(वा. प. १. का श्लो ३५) इति॥

---

१. अस्याम्—'स्मृतौ' इत्यर्थः।
२. परमवशिष्यते—परिशिष्यते इति ३ पु. पा.।
३. 'एकवक्तृप्रयुक्तत्वेन विशेषणात्' इति मु. पु. पा.।

न च सम्बन्धाख्यानसमये वक्त्रेकतया [1]अनाश्रयादनङ्गत्वम्, हेत्वसिद्धेः। स्फुटतरतया तु तदनाख्यातम्। न खलु नैरन्तर्यादयोऽपि आख्यायन्ते।

[2]तद्भावस्तु नैरन्तर्यादिष्विव वक्त्रेकत्वेऽपि तुल्यः। न च [22]ज्ञापकहेतुः विदितसमस्तज्ञापकाङ्गो ज्ञापयतीत्यनैकान्तिकम्,

१. (अनाश्रयात्)—'न्यूनाश्रयादिति ३ पु. पा.।

२. 'तद्भावस्तु नैरन्तर्यादिष्विव वक्त्रेकत्वेऽपि समानः' इति मु. पु. पा.।

22 अत्रेदमनुसन्धेयम्–नशक्यानुमानमित्यादिना पूर्वपक्षिणोक्तमर्थधीभेदादनुपपद्यमानात् अप्रत्यक्षमनुमेयं शब्दतत्त्वं सिद्ध्यतीति। अन्योन्याश्रयत्वेन तद्दूषयति ग्रन्थकृत्। तथाहि–अर्थधीभेदात् व्यवस्थापनम् तावत् अनुमानात् भवितुमर्हति, ज्ञातसंबन्धस्यैवानुमानसंभवात्। स्फोटतत्कार्ययोस्संबन्धग्रहणं न भवति, अप्रत्यक्षत्वात् स्फोटात्मनः। न च प्रत्यक्षानुमानाभ्यामतिरिक्तं प्रमाणान्तरं विद्यते। नवाङ्गीक्रियते आगमोऽपि नित्यस्तावदनुपलभ्यमानोऽस्मिन् प्रमाणम्। न चानित्यः, निर्मूलत्वात्। उपमानन्तु सादृश्यमात्रमनाशंकनीयमेव, अतोऽनुमानासंभवः, अनुमानादेव शब्दं गृहीतवतामर्थप्रत्ययो भवति, तेनैवानुमानमित्यन्योन्याश्रयमपरिहार्यमित्याशयः।

ज्ञापकहेतुरिति—अत्रेदं बोध्यम्–यो हि विदितो भूत्वा ज्ञापयति, स ज्ञापकहेतुरित्यभिधीयते। तत्र कानिचित् विदितानि सन्ति सह कुर्वन्ति, कानिचिदविदितान्येवेति व्यवस्था दृश्यते। चक्षुरादीनि मनश्च सत्तामात्रेण कारणानि भवन्ति, तत्र मनसो ज्ञानसामान्यं प्रति हेतुत्वात्। यथाहुः प्रामाणिकाः—'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति' (न्या, द, १-१-१६)। विभुनैवात्मना अधिष्ठितेष्विन्द्रियेषु नानार्थसंबन्धेष्वपित्यर्थसंयोगक्रमवशात् ज्ञानोत्पत्तिक्रमः प्रक्रमते, तन्मन इत्युच्यते, तस्य मनसो परिमाणविषये वार्तिककारीयेषु पक्षद्वयं वर्तते, मनो विभ्विति चिदानन्दपण्डितादय आतस्थिरे, वाचस्पतिमिश्रप्रभृतयो मनसोऽणुत्वमुररीकुर्वन्ति। अत एव विधिविवेकव्याख्यायां न्यायकणिकायां मनसोऽणुत्वमेवाश्रितं प्रतीयते।

'इन्द्रियभावस्त्वणुन एव मनसः' (न्या० कणि० पृ० ७८।)

भवति हि मनोऽनुमानाङ्गम् । न चास्य वेदनमत्रोपयुज्यते । 'तदिह[23] दृश्यमानेभ्यो दृश्यमानप्रकारानुपातिभ्यः अभिधेयप्रत्यय उपपद्यमानो[24] नैवाज्ञातावयवमत्यन्ताननुभूतं पदतत्त्वमुप[2]कल्पयति, अतिप्रसङ्गात् । न चापि समभिव्याहृतपदाभिहितपदार्थप्रत्ययाधीनोत्पत्तिर्वाक्यार्थधीरन्यथोपपद्यमानाऽनुभूयमानपरस्पर[3]व्यावृत्तमूर्तिपदान्वयपद्धत्या,अत्यन्तापरिदृष्टं वाक्यमेकमन[4]वयवमिति[25]तत्सिद्धमेतत्

---

१. 'तदिह दृश्यमानेभ्य एव वर्णेभ्यो दृश्यमानप्रकारभेदानुयायिभ्योऽभिधेयप्रत्यय उपपद्यमानो नैतानवज्ञायानवयवमिति मु. पु. पा. ।

२. 'उपकल्पयितुमर्हति' इति मु. पु. पा. ।

३. 'परस्परव्यावृत्तमूर्त्तीनि पदानि' इति मु. पु. पा. ।

४. 'अनवयवमवगमयति' इति मु. पु. पा. ।

---

यथोक्तं, विश्वरूपाचार्येणापि भावनाविवेके—

'मनो भूतपरिस्पन्द आत्मनस्तत्प्रयत्नजः ।
विकृत्यादिर्यथा तस्मिन् साधनोपनिपाततः ।।'

(भा० वि० श्लो० ४७)

इत्यत्र भूतानामिव मनसोऽपि परिस्पन्दं वदताऽणुत्वमभ्युपगतमिति प्रतीयते । सुखाद्यन्यतमग्रहसाधनत्वं मनसो लक्षणं ग्रन्थकृतोऽभिमतम् । तस्य चाणुत्वमुपर्युक्तप्रकारेण, अन्यथा युगपदनेकेन्द्रियाधिष्ठानाद्युगपज्ज्ञानोत्पत्तिप्रसंगादिति । मनसो विभुत्वसाधनप्रकारो नीतितत्त्वाविर्भावादिषु द्रष्टव्यः ।

23 तदिह दृश्यमानेभ्यः—अस्यायमाशयः—वर्णेषूद्भावितस्य दूषणस्यासत्त्वात् यावन्तो यादृशा इत्यादि वार्तिकमतमेव स्थितमित्यभिप्रायो बोध्यः । अनुपपत्तिभ्य इति क्वचित्पाठो दृश्यते, तस्मिन् पक्षेऽयमर्थः—अदृश्यमानप्रकारानुपपत्तिभ्यः इत्यकारप्रश्लेषो बोध्यः ।

24 पूर्वपक्षिणा यदुक्तं वर्णेभ्योऽर्थप्रत्ययो नोपपद्यत इति; तन्निरस्य, अन्यथोपपत्ति प्रकृतेऽर्थापत्तिदूषणे पर्यवसाययति—नैवाज्ञातेत्यादिना । अज्ञातावयवम्-अनवयवमित्यर्थः । तथैव वा पाठः

25 तत्सिद्धमेतत्—अत्रेदं बोध्यम्—शाब्दिकैः कार्यमुखेन संबन्धिनिरूपणं कृतम् । तथाहि अयंगौः इति ज्ञाने श्रौत्रे बहवोऽर्थाः प्रतिभासन्ते, तत्र कस्तेषां शब्द इत्युपक्रम्य, येनोच्चारितेनायंप्रत्ययो भवति, स शब्दः इत्युपसंहृतम् । एवञ्च येनोच्चारितेन इत्यादि पातञ्जलभाष्ये यदर्थप्रत्ययोन्नेयत्वं शब्द-

अर्थापत्तेः, अनुमानस्य वा निवृत्तिस्तदेकगोचर[1] पदवाक्याभावसाधनीति, स्थितं नानवयवमेकं वाक्यं वाक्यार्थस्य बोधकमिति।

## द्वितीयपक्षस्योपन्यासः

नापि[2] द्वितीयः कल्पः। तथा हि-

नान्त्यवर्णश्रुतिः स्मृत्या नीता वाक्यार्थबोधिनी।
न स्मृति स्तदपेक्षत्वाद्यौगपद्यं न चानयोः ॥ ३ ॥

स[2] खल्वन्थमन्त्यो वर्णः पूर्वपूर्ववर्ण-पद-पदार्थविज्ञानजनितवासना-

१. 'तदेकगोचरपदवाक्यस्फोटावभासिनीति नानवयवमेकम् वाक्यार्थावबोधकमिति' मु. पु. पा.।

(स्फोटावभासिनी)—'स्फोटाभावसाधनीति २ पु. पा.।

२. स खल्वन्त्यो वर्णः इति मु. पु. पा.।

स्योक्तम्। तत् किमनुमेयत्वम्, अथवाऽर्थापत्तिकल्प्यत्वमिति द्वेधा विकल्पः। तत्राद्यस्य कल्पस्य निरासः, नचाप्रत्यक्षमर्थधीभेदकार्येणेत्यादिना अनुमेयत्वं निराकृतम्।

अपि वर्णेभ्यः इत्यादि ग्रन्थेनाऽर्थापत्तिकल्प्यत्वं दूषितम्। मीयमाने त्यादि श्लोकार्थस्त्वर्थापत्तिविषय एवेति बोध्यम्।

26 एवं तावत् निरवयवं वाक्यं वाक्यार्थस्य बोधकमिति प्रथमः पक्षो दूषितः। वाक्यमेव वाक्यार्थस्य बोधकमित्यायातम्, औचित्यात्। आनुपूर्वीविशिष्टा वर्णा एव पदानि, तान्येव वाक्यमिति पर्यवस्यति, इदानीं वर्णवादिनामेव विवादे वाक्यार्थस्य किं मूलमितियवसरप्राप्तम्। तत्रैकार्थावच्छेदोपाधिना वर्णानामौपाधिकं रूपमिति व्यवस्थापितमाकरे। औपाधिकाच्च स्वाभाविकस्य रूपस्य प्राथम्यं भवति। तच्च वर्णस्वरूपनिमित्तमित्यायाति। वर्णस्वरूपस्यापि स्मर्यमाणावस्थातोऽनुभूयमानावस्थाया प्राथम्यात्, एकस्य निमित्तत्वसंभवे अनेककल्पनाया अन्याय्यत्वात् अनन्तरोपन्यस्तं द्वितीयपक्षं दूषयितुमनुवदतिः—नापि द्वितीयः कल्प' इति।

'चित्ररूपाश्च तां बुद्धिं सदसद्वर्णगोचराम्।
केचिदाहुर्यया वर्णो गृह्यतेऽन्त्यः पदे पदे ॥'

स्फोटवा० श्लो० १११ इति।

वार्तिकोक्तदिशा वाक्ये चित्रबुद्धेरुपदर्शनेन अन्त्यवर्णश्रुतिः इतिश्लोकांशो व्याख्यातः।

निचयसचिवश्रवणेन्द्रियसमधिगतजन्मग्रहणस्मरणरूपसद्‌सद्वर्णनिर्भासप्रत्ययविपरिवर्त्ती[1] पदवाक्यार्थधीहेतुरूपेयते। सः [27]चरमपदतदर्थसम्बन्धस्मृतिमाधाय वाक्यार्थधियमादधीत, अनाधाय वा। आधाय चेत् तद्धेतुभावनोद्बोधसमये [3]स्वजन्यसंस्कारकारणविनाशाघ्रातश्रुतिरश्रूयमाणः सम्बन्धस्मृतिसमये कथं तत्स[4]हकारी [5]वाक्यार्थधियमादधीत। न (च) तदसहका-

१. जन्मस्मरणरूपावाप्तवैचित्र्य इति मु. पु. पा.।

२. (पूर्वं पूर्वं विपरिवर्त्ती)–पूर्वं पूर्वं वर्णप्रत्ययजन्यानां संस्काराणां समूहः सहकारी यस्य तादृशेन श्रोत्रेण जनितः पूर्ववर्णांशे स्मरणरूपतया चरमवर्णविषये चानुभवरूपतया प्राप्तरूपद्वयः सतोः अन्त्यस्य असतां च पूर्ववर्णानां प्रकाशको यः प्रत्ययः तद्विषय इत्यर्थः।

३. (स्वजन्यसंस्कारकारणविनाशाघ्रातश्रुतिः)–संस्कारस्य स्मृतिनाश्यत्वात्स्मृतौ जातायां संस्कारनाशेनोत्तरज्ञानेन पूर्वज्ञाननाशाद्वर्णप्रत्यक्षनाशेन चेति भावः।

४. ( तत्सहकारी )—'तत्सहकारिणमिति २. पु. पा.।

५. 'वाक्यार्थप्रत्ययः' इति मु. पु. पा.।

27 इदानीं पूर्वार्धोत्तरार्धयोर्विषयव्यवस्थया व्याख्यातुमुपक्रमते–स चरमेति।

अत्रेदमनुसन्धेयम्—अन्त्यो वर्णश्चरमपदन्तदर्थसंबन्धस्मृतिमाधाय यदि वाक्यार्थधियमादधीत, तर्हि तत्स्मृतिहेतुर्भावनासंस्कार तत्समुद्बोधोऽवश्यं प्रागनुत्पन्नः, तदानीमेव कुतश्चित् कारणात् समुत्पन्न इत्येषितव्यम्। तत् कारणञ्च संबन्धिनोरन्यतरस्य पदस्य श्रवणम्, अन्वयव्यतिरेकानुसारात्। अतः श्रवणानतरक्षणे तत्समुद्बोधः, तदैव चान्त्यवर्णानुभवेन संस्कारान्तरं स्वजन्यं समुत्पादितम्, समेषामनुभवानामनन्तरक्षणे संस्कारजनकत्वनियमात्। संस्कारश्च जन्यः स्वजनकस्यानुभवस्य विनाशे कारणम्। क्रियायाश्चैष स्वभावः—यत्फलं जनयित्वा स्वयं नश्यति। अतएव अभियुक्ताः कथयन्ति 'फलविनाश्यं कर्मे' ति। एवञ्च स्वजन्यसंस्कारकारणकेन विनाशेनालीढोऽन्तिमो वर्णः, कथं वाक्यार्थज्ञानमुत्पादयेत्। अनाधानपक्षेऽन्त्यवर्णश्रुतिश्चरमपद-तदर्थसंबन्धस्मृतिविरहित वाक्यार्थबोधिनीति न युक्तमिति। अनेन श्लोकेन स्मृतिरित्यंशो व्याख्यात इति द्रष्टव्यम्।

रिणो वाक्यार्थधीहेतुभाव इति साम्प्रतम्। अस्मरणे तदनुभव-वैयर्थ्येन[1] गृहीतसङ्गतेरपि प्रथमश्राविणोऽपि 'भिन्धि प्रासेन सिन्धुरम्' इति वाक्यादर्थप्रत्ययप्रसङ्गात्। न चात्यन्तवर्ण-बोधितसंस्कारा स्मृतिरनुभवेन सह युगपदुत्पत्तुमर्हति। न च न्याय्यो युगपदुत्पादः प्रत्ययानाम्।

[2]कारणस्य प्रत्ययपर्याये सामर्थ्यात्। अन्यथा [3]समानविषय-बुद्धिधारानुपपत्तेः। सहसैव यावत्कर्त्तव्यकरणात्, समर्थस्य क्षेपा-योगात्। न च तावन्तं कालमस्ति प्रथमोत्पन्नधीजनितासंस्कारभेदः यतः पुनरपि चरमविषयं विज्ञानं जनयेत्। यथाहु—

क्षणिकं साधनञ्चास्य बुद्धिरप्यनुवर्तते।
मेघान्धकार शर्वर्यां विद्युज्जनितदृष्टिवत्॥ (श्लोवा·पृ७४०-४१) इति॥

न चाननुभूयमानस्य सत्तामात्रेण बोधकत्वमित्यसकृदवोचाम।

## तृतीयपक्षस्योपन्यासः

[28]अस्तु तर्हि स्मृतिदर्पणारूढा वर्णमालैव वाक्यार्थधीहेतुः। वृद्ध-प्रयोगाधीनावधारणो हि शब्दार्थसम्बन्धः। न च पदमात्रं व्यवहा-

१. 'वैयर्थ्येनागृहीतसङ्गतेरपि प्रथमाश्राविणो 'भिन्धि प्रासेन भिदुरम्' इति वाक्यार्थप्रत्ययप्रसङ्गात्। न चान्त्यवर्णोद्बोधित-संस्काराधीनजन्मा स्मृतिः इति मु. पु. पा.।

२. कारणस्य—करणस्य मनसः। अत एव न्यायसूत्रम्—'युग-पज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्।' अ. १.आ. १ सू. १६ इति। करणस्य इति मु. पु. पा.।

३. समानविषयबुद्धिधारानुपपत्तेः—प्रथमानुभवेन संस्कारो-त्पादाद् द्वितीयादिज्ञानानां स्मृतित्वेन धारावाहिकप्रत्ययानुपपत्ते-रित्यर्थः।

28 तृतीयपक्षं परिगृह्णाति—अस्तु तर्हि स्मृतिदर्पणारूढा वर्णमालै-वेति। अस्यायं भावः। सर्ववर्णसमुदायो वाक्यार्थधियं प्रति कारणम्। नत्वन्त्यस्य हेतुत्वम्, इतरेषां सहकारित्वमिति वैषम्यमंगीक्रियते।

अत्रत्यैनैवकारेण पदपदार्थादीनां व्यावृत्तिः। पदार्थहेतुत्वे शब्द-त्वाभावात् पदहेतुत्वे पदार्थत्वप्रसंगः। अन्त्य वर्ण-निरवयवाखण्डयोश्च मीयमानपरित्याग इत्यादिना निषेधात्, एवञ्च वर्णमालैव वाक्यं भूत्वा वाक्यार्थस्य वाचिकेत्यादावुपन्यस्तानां पक्षाणामेष पक्षो वर्तिष्यत इति।

राङ्गं प्रयुञ्जते वृद्धाः, किन्तु वाक्यमेव, तच्चानवयवं न्यपेधीति;-स्मृतिसमारूढा वर्णमाला परिशिष्यते। सा च नैमित्तिकं वाक्यार्थ-बोधमाधत्ते। [1]पारमार्थिकस्तु पदतदर्थबोधो निमित्तमात्रे णावतिष्ठते. वर्णमालैव वाक्यार्थधीहेतुः-इति।

## तन्निरासः

[2]तदयुक्तम्।

[29]"गौरवाद्विषयाभावात्तद्बुद्धेरेव भावतः।
वाक्यार्थधियमाधत्ते स्मृतिस्था नाक्षरावलिः[3]॥ ४॥

## गौरवादिति प्रथमहेतोर्निरासः

यदि हि वर्णमालैव [4]स्मृतिस्था वाक्यार्थं बोधयेत्[5], ततोऽर्भक! गामानय, अर्भक! गां बधान, शिशो! गामानय, शिशो! गां बधान, [6]बाल! गामानय, बाल! गां बधान, डिम्भ! गामानय, डिम्भ! गाम् बधान [7]त्यष्टानां वाक्यानां अष्टौ शक्तयः कल्पनीयास्तत्रेति कल्पना-गौरवम्। पदवादिनस्तु [8]सप्तानां सप्तैव शक्तय इति कल्पनालाघवम्

---

१. (पारमार्थिकस्तु)—वाक्यघटकस्मर्यमाणसकलवर्णमालायाः एवान्यथानुपपत्त्या वाक्यार्थबोधे हेतुत्वम्, पदज्ञान-पदार्थोपस्थित्योस्तु तत्र सहकारितामात्रमित्यर्थः।

२. 'तदप्ययुक्तम्' इति मु. पु. पा.।

३. 'नाक्षरावली' इति मु. पु. पा.।

४. 'स्मृतिसमारूढा' मु. पु. पा.।

५. 'अवबोधयेत' इति मु. पु. पा.।

६. बालक! गामानय! बालक! गां बधान इति मु. पु. पा.।

७. (अष्टानां)—अनन्तानामिति ३. पु. पा.।

८. 'सप्तैव सप्तानां पदानां शक्तयः कल्पनीया इति लाघवम्' इति मु. पु. पा.। 'लाघवमिति' ३. पु. नास्ति।

---

29 तदयुक्तमित्यादिनोपपादितमर्थं दूषयति। तत्र कारणमाह-गौरवादिति, नाधत्ते-नाधातुमर्हतीत्यर्थः। अयुक्तत्वे उत्तरार्धेन हेतुमुपन्यस्यति, तत्र पूर्वार्धेन हेतूपन्यास इति विवेकः। स्मृतिस्या वर्णमाला वाक्यार्थमभिदध्यादिति स्वीकारेऽष्टानां वाक्यानामष्टौ शक्तय इति शक्तिकल्पना-गौरवम्। पदवादिनस्तु सप्त शक्तय इति लाघवमित्यर्थस्तु मूल एव विशदः।

[1]शुक्लामिति पदप्रक्षेपेण पुनः पदवादिनोऽष्टानां पदानामष्टौ शक्तयः इति । तव तु षोडशानां षोडशाऽपराः शक्तयः इति महद्गौरवमापन्नम् ।

## विषयाभावादिति द्वितीयहेतोः निरासः

अपि च, इयमक्षरमाला पदार्थावगमपूर्वकं वाक्यार्थविज्ञानम् [30]जनयेत्, [2]अतत्पूर्वकं वा । न तावदतत्पूर्वकम् [3]संसृज्यमानपदार्थ-विषयाधीनज्ञानो हि संसर्गो न संसृज्यमानान्पदार्थानन्तरेण शक्य-

१. 'एवं शुक्लामिति पदप्रक्षेपे पदवादिनोऽष्टानां पदानामष्टौ शक्तयः कल्पनीया इति लाघवम्' तव तु षोडशानां वाक्यानां षोडश-अपरा शक्तयः कल्प्या' इति मु. पु. पा. ।

२. 'अतत्पूर्वा वा । न तावदतत्पूर्वा' इति मु. पु. पा. । 'अतत्पूर्वं वा । न तावदतत्पूर्वमिति ३ पु. पा. ।

३. 'संसृज्यमान पदार्थविषयविज्ञानाधीनो हि संसर्गः संसृज्य-मानपदार्थनिरूपणमन्तरेण न शक्यनिरूपणः' इति मु. पु. पा. ।

30 द्वितीय तृतीयहेतुव्याख्यानमुपक्रमते 'अपि चेति' । अस्य पक्षस्य निराकरणपरा एते श्लोका :—

वर्णावल्यपि वाक्यार्थपदार्थज्ञानपूर्वकम् ।
अभिधत्ते, विना तेभ्यो नासौ बुद्धिमुपाश्नुते ।।
वर्णावल्यः पदाख्याया अल्पिका नियता स्थिताः ।
लोके स्वेषु पदार्थेषु तास्संभूय परस्परम् ।
वाक्यार्थधियमादध्युस्तेषां संसर्गं एव सः ।।
तेनेयं भागशो भूत्वा पदार्थानभिधाय नः ।
विशिष्टार्थप्रबोधाय पश्चात् भूत्वा महावली ।
अभिधत्ते पदार्थानां संसर्गमिति बुध्यताम् ।।
एवञ्च सति शाब्दत्वं वाक्यञ्चान्यत् प्रसिद्ध्यति ।
तद्भूतानां क्रियार्थेनेत्यत्राप्येषैव वर्णिता ।। इति ।।

अत्रेदमनुसन्धेयम्--येषु वाक्येषु त्रिचतुराणि पंचषाणि, वा पदानि सन्ति तद्वर्तिनी वर्णमाला न स्मर्यते, पदार्थज्ञानव्यवहितत्वात् । अर्थे तु कथंचित् क्लेशेन तदा वर्णमाला मात्रस्मृतिरप्यस्तीत्युच्यते, तथापि पूर्वोक्ते भ्योऽधिकपदवत्सु वाक्येषु सा इति दुष्करा वर्णावली स्मृति पथमानेतुं न शक्या; एवंच प्रत्येकं सहितेषु वा वर्णविषयिणी स्मृतिर्न संभवति ध्येयम् ।

निरूपणः। तत्पूर्वक्रम्चेत्, तथा हि—यथा यथा पदानि श्रूयन्ते, तथा तथा पदार्था अपि प्रतीयन्ते।

तदेताः पदतदर्थप्रतीतयो भावनानिचयाधानद्वारेण स्वगोचरचारिणीमेकामेव स्मृतिधियमादधति, तदारूढानि पदानि पदार्थानतिदूरवर्तीनि वाक्यार्थबुद्धेरीशत इति।

तदप्यचतुरस्रम्। [३]एवं सत्यपेक्षणीयेभ्यः पदार्थज्ञानेभ्य एव तत्सिद्धेरलमनया वर्णमालया। [31]तथा तत्सामर्थ्यं निवेदयिष्यते च। त्रिचतुरपञ्चषवाक्यवर्तिनी[४] पदार्थप्रत्ययव्यवहितापि क्लेशेन वर्णमाला स्मर्येतापि, तदभ्यधिकपदवति तु[५] वाक्ये साऽतिदुष्करा तस्मादिदमपि दर्शनम् अदृश्यमानसुन्दरं नाद्रियन्ते बुधाः।

---

१. 'भावनानिचयद्वारेण' इति मु. पु. पा.।

२. 'अपदार्थानीति ३ पु. पा.। 'सपदार्थान्यदूरवर्तीनि' इति मु. पु. पा.।

३. 'एवं च सत्यवश्याश्रयणीयेभ्यः पदार्थज्ञानेभ्य एव सिद्धेः कृतमनया वर्णमालया। तेषां च सामर्थ्यं निवेदयिष्याम इति मु. पु. पा.।

४. (वर्तिनी)—'वर्तिनीनां पदार्थेति २. पु. पा.। तदा पदव्यक्तीनामिति विशेष्यमध्याहार्यम्' इति। वर्तिनी नानापदार्थप्रत्ययव्यवहिता इति मु. पु. पा.।

५. तु वाक्येऽसावतिदुःस्मरा। तस्मादिदमयि मतं अपिदृश्यमान सुन्दरमिति नाद्रियन्ते वृद्धाः॥, इति मु. पु. पा.। 'दर्शनमिति ३. पु. पा.। ७. 'अर्थान्' इति मु. पु. पा.।

---

31 तथा तत्सामर्थ्यम्—तथा पदार्थज्ञानाधानप्रकारेण वाक्यार्थबुद्धिसामर्थ्यं पदानामित्यर्थः निवेदयिष्यत इत्यनेनान्वेति। क्वचित् तेषाञ्च तत्सामर्थ्यमिति पाठः। तेषां पदार्थज्ञानानां वाक्यार्थबुद्धिसामर्थ्यमित्यर्थः। अनेन तद्बुद्धेरेव भावतः इत्येतत्पदार्थबुद्धेरेव कारणात् वाक्यार्थबुद्धिरूपकार्यस्य भावात्—उत्पादादिति व्याख्यायम्।

32 संप्रतिटीकाकारीयं मतमुपन्यस्यति—अस्तु तर्हीति। अयमर्थः यद्येवं तर्हि, अन्यत् सर्वं तिष्ठत्वित्यर्थः। यदिहशास्त्रे लोके वा वाक्यं वाक्यार्थगोचरमभिमतम्, तत् पदान्येवेत्याह—तादृशान् पदार्थानभिदधन्ति पदानि नाम

[32] अस्तु तर्हि—

## चतुर्थपक्षस्योपन्यासः

पदान्याकाङ्क्षतासन्नयोग्यार्थान्तरसङ्गतान् ।
स्वार्थानभिदधन्तीह[33] वाक्यं वाक्यार्थगोचरम् । ५।।

पदार्थमेव हि (एकं) प्रधानं गुणभूतार्थान्तर[2] व्यतिषक्तं वाक्यार्थमाचक्षते धीराः । तच्च पदान्येवाकाङ्क्षाद्युपधानलब्ध सुकर[3]व्यतिषक्तीनि प्रयोजयितुमीशत इति, कृतमप्रामाणिकानुपपद्यमानान्वयव-वाक्यादिकल्पनाभिः ।।

ननु—

पदान्तरस्य[34] वैयर्थ्यमश्रुतान्वयबोधने[4] ।
श्रुतान्वितताभिधाने तु व्यक्तमन्योन्यसंश्रयम् ॥६॥

---

१. (अभिदधन्ति)—अभिदधन्ति पदानि वाक्यम् । वाक्यपदेन पदसमूह एव व्यवह्रियत इति भाव इति । 'वाक्यं वाक्यार्थगोचर-मिति २. पु. पा. ।

२. 'गुणभूतार्थान्तरेण व्यतिषक्तं वाक्यार्थमाचक्षते वृद्धाः' इति मु. पु. पा. । वृद्धाः—प्रभाकर मिश्रा इत्यर्थः

३. 'सुकरव्युत्पत्तीनि प्रत्याययितुमीशते' इति मु. पु. पा. ।

४. (बोधने)—'कल्पने इति ३. पु. पा. ।

---

वाक्यमिह वाक्यार्थगोचरमस्तित्वत्यन्वयः । वाक्यार्थः गोचरो यस्य तदिति बहुव्रीहिः । अस्यार्थः—पदान्येव वाक्यम्, पदार्था एव वाक्यार्थ इति तन्मतस्थितिः । यतोऽन्वितेषु व्युत्पत्तेः अन्वितार्थाः पदार्थाः पदैरभिधीयन्ते, अतोऽन्वितार्थ पराण्येव पदान्येवटीकाकारस्य मतम् । पदानीति-तानि की 'दृशानीत्याकांक्षायामाह' आकांक्षितेति ।

33 अभिदधन्ति—नाभ्यस्ताच्छतुः पा० सू० ३-पा इति नुम्प्रतिषेधस्य, 'वा नपुंसकस्य' पा-सू पा इति नपुंसकेष्वनित्यत्वादभिदधन्तीति नुमः प्रयोगः इति बोध्यम् ।

34 अभिहितान्वय वादी अन्विताभिधानवादे अन्योन्याश्रयदोषमुद्भाव-यति—'पदान्तरस्येति'

अथापि स्यादनभिहितेनैवार्थान्तरेणान्वितमर्थमभिदधीत पदम्? अभिहितेन वा। [1]तत्रानभिहितस्वार्थान्तरान्वितस्वार्थाभिधाने पदादेकस्मादेवोच्चारिताद्विवक्षितार्थप्रतीतेः वैयर्थ्यमितरेषाम्। अभिहितान्विताभिधाने तु यावत्पचेदित्यनेनान्वितस्वार्थो नाभिधानीयः, तावत्स्थाल्यामित्यनेनाधिकरणमुखा नाभिधीयते। एवमुखायामित्यनेनापि यावत्स्वार्थो नाभिधानीयः, तावत्पचेदित्यनेन स्वार्थो नाभिधीयत इति परस्पराश्रयप्रसङ्गः। पदार्थस्वरूपाभिधानपूर्वके तु तद्वदन्वितार्थाभिधाने द्विरभिधानमप्रामाणिकमनुपपद्यमानमापद्येत। न च पदजातं प्रथममर्थजातं स्वरूपेणाभिदधदेव यथास्वमभिधेयानि साहचर्यमात्रादर्थरूपाणि स्मारयति। अथैतान्यान्वितान्यभिधत्त इति साम्प्रतम्।

यतः— पूर्वानुभवयोनित्वात्स्मृतिस्तदनुसारिणी।
स[2] चान्विते न स्वरूपे ततोऽपेक्ष्यानपेक्षणम्॥७॥

## श्लोकेन संक्षेपणोक्तस्यार्थस्य विशदीकरणम्।

न खलु पदं पदार्थमात्रे क्वचिदपि दृष्ट[3]चरप्रयोगम्, येन[4] तन्मात्रं स्मारयेत्, तन्मात्रेण व्यवहारायोगात्, तत्प्रयुक्तत्वाच्च तदुच्चारणस्य; अपि त्वन्विते स्वार्थे। तथा च गामानयेत्यत्रानयनान्वितस्वार्थो गोशब्दस्तेन सहचरितो[5] 'गां पश्येत्यत्र[6] तदन्वितामेव

१. (अनभिहितस्वार्थान्तर)—अनभिहितम्—स्वेनानुपस्थापितं स्वबोध्यत्वेनाभिमतमर्थान्तरं तदन्वितस्वार्थस्याभिधाने इत्यर्थः।

२. 'सा चान्वितस्वरूपेण ततोऽपेक्ष्यानपेक्षणा' इति मु. पु. पा.। अपेक्ष्यमाणस्य—आकांक्ष्यमाणस्यार्थान्तरस्यानपेक्षणा—जिज्ञासाभावः इत्यर्थः। तथैवोपपादयिष्यति—इति।

३. 'दृष्टचरं इति मु.पु.पा.।

४. येन तत्साहचर्येण तन्मात्रम्, अपि त्वन्वितस्वार्थे' इति मु. पु. पा.।

५. सहोच्चरित इति मु. पु. पा.।

६. 'अत्रापि' इति मु. पु. पा.।

गां स्मारयेत्, तन्मात्रम्। तथा च तन्निराकाङ्क्षो 'गौर्न पश्ये'त्यनेन अन्वियात्। एवं [1]"प्रासादं पश्ये'त्यत्र प्रासादान्वितस्वार्थं पश्यपदम् तन्निराकाङ्क्षं न गवा सम्बध्यत इति, सर्वपदार्थ[2]प्रत्ययो दत्तजलाञ्जलिः प्रसज्येत। न चाव्यभिचाराद् गामिति पदं स्वार्थमेव स्मारयति, न तु पदार्थान्त[3]रार्थं व्यभिचारादिति साम्प्रतम्। [35]"पट्वभ्यासा"-हिता हि भावना प्रबोधवती [5]स्मृतिः सञ्जीयते। तस्याश्च प्रबोधः प्रणिधानादिजन्मा नाव्यभि चार एवा[6]यतते। [7]साहचर्यमात्र[36] स्यापि तु सम्बन्धरूपेण प्रणिधानादिगणपाठादुपपत्तेश्च, तद्बोधो न विरुद्ध्यते। तच्च स्वार्थस्येव पदार्थान्तरस्याप्यस्तीति पदान्तरार्थ-

---

१. 'प्रासादान्वितं पश्येति पदं' इति मु. पु. पा.।

२. 'सम्बध्येतेति सर्वत्र वाक्यार्थो दत्त' इति मु. पु. पा.। 'वाक्यार्थप्रत्यय इति ३ पु. पा।

३. 'पदार्थान्तरं' इति मु. पु. पा.।

४. 'पट्वभ्यासादरप्रत्ययाहिता भावना' इति मु. पु. पा.।

५. स्मृतिहेतुरिति मु. पु. पा.।

६. 'जन्माव्यभिचार एव नायतते' इति मु. पु. पा.।

७. अव्यभिचारे सत्येव स्मृतिजनक इति नियमो नास्तीत्यर्थः।

८. साहचर्यमात्रमस्याप्यस्तीति पदार्थान्तरसहितमेव' इति मु. पु. पा.। साहचर्यमात्रस्यापि च सम्बन्धतया प्रणिधानादिगणे पाठाद्युपपत्तेश्च तदुद्बोधहेतुभावो न विरुद्धयते। तच्च स्वार्थस्येव पदार्थान्तरस्याप्यस्तीति ३. पु अधिकः पाठः।

---

35—पट्वभ्यासाहितेत्यत्राभ्यासशब्देनानुभवपौनःपुन्यमभिधीयते इति बोध्यम्।

36—'साहचर्यमात्रस्ये'ति। तत्र यद्यपि साहचर्यमात्रस्य पाठो नास्ति, तथापि 'संबन्धे'ति संबन्धस्य पाठात् साहचर्यमात्रस्य संबन्धत्वाविशेषात् संबन्धरूपेण पाठोऽस्त्येव, यदि साहचर्यमात्रस्य संस्कारोद्बोधकत्वं न घटेत, तदा संबन्धरूपेण प्रणिधानसूत्रे पाठो नाभीयेत, साहचर्यमात्रेण शिष्योपाध्यायादौ स्मृतिदर्शनात्। अत एव ग्रन्थकृता प्रणिधानादिगणपाठः उपरिष्ठादुदाहरिष्यत इति मन्तव्यम्।

सहितमेव स्वा[1]र्थमनाकाङ्क्षितं सहसैव स्मारयेदिति, हता वाक्यार्थधीस्तपस्विनीति, पदानामर्थस्व[2]रूपमात्रमेषितव्यम्। तथा च ते[3]ऽर्थाः क्रियादयः स्वसामर्थ्येन स्वरूपमात्रेण पदैरभिहिताः विना कार[4]कादिभिरपर्यवस्यन्तस्तदाकाङ्क्षायोग्यता[5] सत्तिसहकारिणो [6]वाक्यार्थधियमादधतीति युक्तम्।

अत्रोच्यते[37]—

[38]विधान्तरानवगमात्स्मृतिलक्षणयोगतः।
अभ्यासातिशयाद्रूपस्मृतेर्नान्योन्यसंश्रयः[7] ॥८॥

---

१. 'स्वार्थमनाकाङ्क्षं स्मारयेदिति हता बत वाक्यार्थधीः' इति मु. पु. पा.।

२. 'अर्थरूपमात्राभिधानमेषितव्यम्' इति मु. पु. पा.।

३. 'ते ते पदार्थाः' इति मु. पु. पा.।

४. 'कारणादिभिः' इति मु. पु. पा.।

५. 'योग्यतासन्निधिसह' इति मु. पु. पा.।

६. 'वाक्यार्थधियमि' ति मु. पु. पा.।

७. 'नान्योन्यसंश्रयम्' इति मु. पु. पा.।

---

37—'अत्रोच्यते'—इति। पदार्थप्रतीतेरेव वाक्यार्थप्रमाणत्वे पदानाम् वाचकत्वं न स्यादिति न शंकनीयम्। पदानां स्मारकत्वेनापि पदार्थप्रतीतेरुपपत्तिस्संभवति, अर्थोपस्थितिः—पदार्थस्मृतिरित्येवं युक्तम्। अन्येषाम् संभावितानां प्रकाराणामसंभवात्, आचार्याणां तत्र तत्र व्यवहारोऽपि स्मारयतीति उपयुक्तमेवार्थं पुष्णाति इत्यादिकं मनसि निधायाऽन्विताभिधानवादी परिहरति।

'विधा च पञ्चमी कापि न च ज्ञाने समस्ति नः।
एवञ्चाश्रीयतामेषा स्मृतिरेवेत्यकामतः ॥' इति

38—अन्विताभिधानवादी समुद्भावितमन्योन्याश्रयदोषं परिहरति 'विधान्तरे'ति। अत्रेदं बोध्यम्—गामानयेत्यादौ येन पदार्थान्तरेणान्वितम् स्वार्थमभिदधाति गोपदम्, तत् किमन्येनानभिहितम्, अथवाऽभिहितमिति द्वेधा विकल्पः। तत्र नाद्यः कल्पः, पदान्तरस्य वैयर्थ्यात्, विनैव तदभिधानं तदन्वयलाभात्, एकस्मादेव पदात् सर्वार्थप्रतीतिप्रसंगात्। ननु योग्येतरमात्रान्विताभिधानेऽपि, तद्विशेषान्विताभिधानसिद्धये पदान्तरोपादानमिति नाशंकनीयम्। विशेषान्विताभिधानेऽपि अभिहितानभिहितविकल्पस्य तुल्यत्वात्।

[1]'इदं भवानपि निरूपयतु प्रमाण-संशय-विपर्यय-स्मृतिषु कतमेयम् पदात्पदार्थप्रतिपत्तिरिति? तत्र न तावत्प्रमाणमनधिगतार्थबोधनम् तदुपेयते। यथाहुः—

'सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा।' (श्लो-वा-पृ.२११)

इति।

न च पदात्पदार्थधीरनधिगतार्थगोचरा। न खलु सम्बन्धसंवेदनसमये समधिगतोऽर्थः पदैरभिधीयमानो देशकालावस्थाविशेषेणाप्यतिरिच्यते। अनतिरिच्यमानश्च न स्वरूपे विज्ञानं प्रमाणयति। अत एवाहुः—

परोक्षश्चानुभूतश्च यस्तत्र स्मृतिरिष्यते।

प्रमिते च प्रवृत्तत्वात्स्मृतेर्नास्ति प्रमाणता॥' १०३-पृ ४३१ इति।

'पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते।' १०७पृ.४३१इति च।

न हि पदस्य प्रणिधानादिभ्यः संस्कारोद्वोधहेतुभ्यः कश्चिद्विशेषः। संशय-विपर्ययहेतुभावस्तु पदस्येति स्थवीयः। न च पंचमी विधा समस्तीति, स्मृतिः परिशिष्यते। सा चान्वितगोचरा, न स्वरूपगोचरेति तुल्यो दोषः। अभिधानतः स्मारितं वाक्यार्थान्वयि, न साहचर्यमात्रादिति चेत्? कुतस्तर्हि 'गङ्गायां घोषः प्रतिवसती' त्यादौ

---

१. 'इद तावन्निरूपयतु भवान्' इति मु. पु. पा.

---

न चरमः—आनयेतिपदेन गोत्वान्विततया आनयनाभिधाने सति, आनयनान्वितं गोत्वं गोपदमाभिदध्यात्, एवं गोपदेनानयनान्विते गोत्वे अभिहिते, तदन्वितमानयनमानयेति पदमभिदध्यादित्यन्योन्याश्रयः प्रसज्येतेत्यर्थः। तदुक्तं शालिकाचार्येण—

'आकांक्षासन्निधिप्राप्तयोग्यार्थान्तरसंगतान्।

स्वार्थानाहुः पदानीति व्युत्पत्तिस्संश्रिता यदा॥

आनन्त्यव्यभिचाराभ्यां तदा दोषो न कश्चन।' पृ. ३८४ इति

तथा—श्रूयमाणं पदं सर्वं स्मारितानन्वितार्थकम्॥

न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम्।

स्मृतिसन्निहितैरेवमर्थैरन्वितमात्मनः॥

अर्थमाह पदं सर्वमिति नान्योन्यसंश्रयः।

मूले उखायां पचती, त्युदाहरणं दत्तमिति ध्येयम्॥

तीरादीनामनभिधेयानां प्रतिभासान्वयः। अपि चाऽभिधानतः[1]स्मारितस्य साहचर्यस्मारितेनैवार्थान्तरेणाकाङ्क्षोपरतेरनाकाङ्क्षस्य [2]चरमप्रतीतेनाभिधानतोऽर्थान्तरेण सङ्क्रमायोगात्समुत्पन्नसङ्कटः वाक्यार्थः प्रसज्यत इति कुतस्तद्भावना? कुतस्तरां च पदैरुद्बोधः? कुतस्तमाञ्च [3]तदन्वयस्मरणमिति, अकामेनाप्यनन्वितस्मरणमभ्युपेयम्।

[39]आत[4]श्चैतदेवं यदभ्यासातिशयः संस्कारातिशयमाधत्ते। स च द्रागित्येव प्रबुद्ध एकपदे स्फुटतरं स्मरणमुपजनयति। [5]दर्शनमात्रजन्मा पुनर्मन्दो [6]विलम्बितप्रबोधो मन्दमेव कार्यमाधातुमुत्सहते। अभ्यासवती च पदस्य स्वार्थेन साहचर्यानुभूतिर्यथा, न तथाऽर्थान्तरेण। अन्वयेऽभ्यासवत्यप्यर्थान्तरेषु तेष्वनभ्यासात्तद्रूपनिरूप[7]णत्वाच्चान्वयस्यानभ्यास एव। तथा च [8]स्मृतिसन्निहिताः स्वरूपमात्रेणार्थान्तराकाङ्क्षाः पदैरन्विता अभिधीयन्त इति, न परस्पराश्रयः।

१. स्मारितस्वरूपमात्रस्य' इति मु. पु. पा.।

२. चरमप्रतीतेन अभिधानतः पदान्तरसमभिव्याहारोत्तरमुद्बुद्धयाऽभिधया पश्चादुपस्थितेनेत्यर्थः।

३. 'अन्वयिस्मरणम्' इति मु. पु. पा.। 'अन्वितस्मरणमिति ३ पु. पा.।

४. इतश्च इति मु. पा.।

५. दर्शनमात्रजन्मा—तत्सहितार्थान्तरसाहचर्यदर्शनजन्य इत्यर्थः। स्वार्थेन सङ्गतिग्रहो यादृशी, अर्थान्तरेण तु प्रयोगभेदेनानियतत्वान्न तादृशीति भावः।

६. विप्रलम्बितप्रबोध इति मु. पु. पा.।

७. 'तद्रूपणाच्च' इति मु. पु. पा.। 'तद्रूपनिराकरणत्वादिति ३ पु. पा.

८. 'स्मृतिसन्निहितस्वरूपमात्रेण अर्था अर्थान्तराकाङ्क्षाः' इति मु. पु. पा.।

39—आतश्च—अस्मादपि कारणादित्यर्थः। यथोक्तं वेजन्यत्वां 'आतो निद्रा—हेतु—विचित्र' इति।

## अभिधानापर्यवसानस्य निरूपणम् ।

ज्ञाप्यनाकाङ्क्षता। आकाङ्क्षा च प्रतिपत्तुर्जिज्ञासा। सा च क्वचिदभिधानापर्यवसानाद्भवति, यथा 'द्वारम्' इति। न ह्यत्र [1]प्रकृत्यर्थातिरिक्ते प्रत्ययार्थे प्रतीतिरस्ति, येनान्वितः प्रकृत्या स्वार्थोऽभिधीयेत, प्रातिपदिकार्थमात्रे प्रथमोत्पत्तेः। तदनभिधानपर्यवसानाय प्रतिपत्ता पदार्थान्तरं स्मारितान्वययोग्यं जिज्ञासते।

## अभिहितापर्यवसानस्योपन्यासः ।

क्वचिच्चाऽभिहितार्थापर्यवसानात्। यथा–'विश्वजिता यजेत' [40] इति। इह हि कार्यस्य[2] विषयकरणान्वितस्याभिधानं पर्यवसितम्। न पर्यवस्यति[3] हि तत्कार्यं नियोज्यभेदमन्तरेण, न खलु कार्यमनुष्ठानम् विना [4]अवतिष्ठते, तदेव नाकर्तृकम्, न चानधिकृतः कर्ता, न चानि-

१. 'प्रकृत्यर्थादतिरिक्ते' इति मु. पु. पा.।

२. 'कार्यस्येति ३ पु. नास्ति। ३. 'पर्यवस्यत्यभिहितं कार्यं नियोज्यभेदमन्तरेण' इति मु. पु. पा.।

४. 'व्यवतिष्ठते। न चाकर्तृकं तत्' इति मु. पु. पा.।

५. (आनुपूर्व्या)—'क्रियायाः सकर्तृकत्वनियमादिष्टसाधनताज्ञानं विना कर्तृत्वानुपपत्तेरनुष्ठानमन्तरेण फलासम्भवात्स्वर्गकामः कर्तृत्वेनान्वेति इति भावः।

६. 'इत्यानुपूर्व्यसिद्धं' इति मु. पु. पा.।

७. 'तदन्वययोग्ये नियोज्ये जिज्ञासा' इति मु. पु. पा.।

40—'विश्वजिता यजेत'। अत्रेदं बोध्यम्–विध्यर्थः कार्यम्, तच्च विषय-नियोज्याभ्यां निरूप्यते, विषयो धात्वर्थः, प्रतिपत्त्यनुबन्धो विषय इति कथ्यते, उत्पत्त्यनुबन्धः करणमित्युच्यते, पुरुषस्य तिस्रोऽवस्थाः क्रमेण भवन्ति, जानाति, इच्छति, करोति, इति, प्राथमिकावस्था नियोज्य इति, द्वितीया अधिकारी, तृतीया कर्ता चेति, एवञ्च प्रकृते यजेतेत्यत्र यजिधातुना विषय उपात्तः, विश्वजितेतिशब्देन तस्यैव करणत्वम्। ताभ्यामन्वितस्य कार्यस्याभिधानं कारकत्वेनाऽनुष्ठानोपयोगित्वात् प्रथममेव निर्वहतीति, अभिधानं पर्यवसितमित्यभिप्रेत्याह 'क्वचिच्चे'त्यादिना–'तेने'त्यन्तेन।

योऽन्योऽधिकृत इत्यानुपूर्वीकसिद्धम्[1]। तेनात्रापि तत्पर्यवसानायास्ति[1] तदन्वययोग्यनियोज्यजिज्ञासा।

## अत्र शंका

न[1] चानन्वितस्वार्थस्मरणमात्रावसितव्यापारेषु पदेषु तदर्था एव आकाङ्क्षादिसहकारिणः करिष्यन्ति वाक्यार्थधियमिति, कृतमत्र पदानां सामर्थ्येनेति साम्प्रतम्।

पदानभिहितानां तेषां मानान्तरगोचराणां वाक्यार्थधीहेतु[2]भावादर्शनात्। श्वेतमश्वद्वं पश्यतः, हेषारवं च शृण्वतः, खुरनिक्षेप शब्दं च 'श्वेतोऽश्वो[2] धावति' इत्यन्वितधियः पदश्रवणमन्तरेणोत्पादो दृष्ट इति चेत्?

## तन्निरासः

न। अनुमानात्, अर्थापत्तेर्वा तदवगमात्। अनवगमाद्वा[3]म्।

१. न चान्वितेति। 'विश्वजिता यजेते'ति वाक्येऽश्रुतमपि स्वर्गकाममन्वितमालोच्य सर्वत्र तथैवास्त्वित्याक्षिपति।

२. वाक्यार्थधीहेतुभावादर्शनात्। 'तथा च तत्र पदाध्याहार इति भावः, अन्यत्रापि क्वचित् 'प्रविश पिण्डीमि' त्यादावध्याहारस्थले इष्टापत्तिरिति।

३. अनवगमाद्वा—व्याप्तिज्ञानाद्यभावे इति शेषः। द्रव्यान्तराभावनिश्चयेऽनध्यवसाय एवेत्यर्थः। तत्सत्त्वेपि तस्याः शाब्दत्वाभावाच्चेत्यपि वक्ष्यति' इति।

अत्रत्यो विषयः प्रत्यक्तत्त्वप्रदीपिकायां पृष्ट १४८ शब्दतः, अर्थतश्चानूदितो दृश्यते, विशेषस्तु भूमिकायां द्रष्टव्यः।

41—आनुपूर्वीकम्। आनुपूर्वी, आनुपूर्व्यशब्दात्, आनुपूर्वीशब्दाद्वा विनयादित्वात् स्वार्थे ठक्, तथा यस्मरणं विनयादिभ्यष्ठक् 'पा-सू इति'

42—श्वेतोऽश्व इति। अत्रेयं विषयपरिशुद्धिः—अत्र दृश्यमानमाकृपम्—अव्यक्तरूपम्। श्रूयमाणौ हेषाशब्द खुरनिक्षेपशब्दौ च श्वेतोऽश्वो धावतीति वाक्यार्थप्रतीतिमुत्पादयन्तीत्यर्थः। अत्रायं विकल्पो बोद्धव्यः—एकनिष्ठतयावगतमेतत्त्रितयं संसर्गबुद्धिं जनयन्ति, आहोस्वित् विशकलिततयाऽवगतमिति। तत्र प्रथमपक्षे यत्र ह्येतत्त्रितयमेकत्रावगतम्, तत्राश्वत्वमिति-

एवंवादी हि तावत्प्रष्टव्यो[4] व्याचष्टाम्—किंस्विच्छ्वेतसमानाधिकरणौ येन हेषाध्वनि-खुरनिक्षेपशब्दाववसितौ, तस्य ज्ञानं निरूप्यते, आहोस्वित् येन सितिमा च पदनिक्षेपशब्दो हेषाध्वनिश्च स्वरूपमात्रेणावसितः। तत्र पूर्वस्मिन् कल्पे लिङ्गसामर्थ्यजमेतत्, न पदार्थसामर्थ्यजम्। उत्तरस्मिन्नपि द्रव्यान्तराभावनिश्चये सत्यर्थापत्तिः, तदभावे च अनध्यवसाय एव।

## पदार्थस्य सप्तमप्रमाणाभ्युपगममुखेन दोषकथनम्।

अपि च पदार्थसामर्थ्यजत्वाभ्युपगमे शब्दमूलत्वाभावेनाऽशाब्द[43]त्वात्, मनसश्च बाह्यानपेक्षस्याप्रवृत्तेः षट्प्रमाणी व्यतिरिच्यमानसहकारिसापेक्षत्वे सप्तमप्रमाणाभ्युपगमप्रसङ्गः[45]। तत्सिद्धमेतन्नानभिहिता अर्था वाक्यार्थधीहेतव इति, पदैरभिहितानामयं महिमा अभ्युपेतव्यस्तेषाम्।

१. नावसाय इति मु. पु. पा.।

२. यदनभिहितानामिति ३ पु. पा.।

३. सप्तमप्रमाणाभ्युपगमप्रसंगः। अर्थसहकारिकारणकमनसः, अर्थस्य वा केवलस्य प्रमितिजनकताया अक्लृप्तत्वात् पदार्थाख्यसप्तमप्रमाणाभ्युपगमस्स्यात्, अन्यथा संसर्गबुद्धेः शब्दाजन्यत्वेऽप्रामाणिकत्वमित्यभिप्रायो बोध्यः।

व्याप्त्या बोधकत्वादनुमानमिति पर्यवस्यति, चरमपक्षे त्वर्थान्तराभावे विनिश्चितेऽनुपपत्त्याऽश्वत्वबोधकत्वमित्यर्थापत्तिरिति परिशेषादापतति। यदि चार्थान्तराभावोऽपि नावधारितः, तदाऽनध्यवसाय इत्याशयो बोध्यः।

43—'अशाब्दत्वादि'ति। पदार्थस्मृतेः, स्मृतानां वा पदार्थानामन्वयबोधकत्वे शब्दजन्यत्वाभावेन संवसर्गप्रत्ययस्याशाब्दत्वं स्यादित्यर्थः।

44—'सप्तम'इप्रमाणेति। अन्वयबुद्धेश्शब्दाजन्यत्वे संसर्गबुद्धेरप्रामाणिकत्वं स्यात्, यदि तस्य प्रामाणिकत्वसिद्धये तस्याः प्रत्यक्षादिष्वनन्तर्भावात् पदार्थाख्यसप्तमप्रमाणस्वीकारः प्रसज्येत इति भावः,

45—सप्तमप्रमाणाभ्युपगमप्रसंगः—'अर्थसहकारिकारणकमनसः अर्थस्य वा केवलस्य प्रमितिजनकताया अक्लृप्तत्वात् पदार्थाख्यसप्तप्रमाणाभ्युपगमस्स्यात्, अन्यथा संसर्गबुद्धेश्शब्दाजन्यत्वेऽप्रामाणिकत्वमित्यभिप्रायो बोध्यः।

## अभिहितान्वयवादे शक्तिकल्पनागौरवप्रदर्शनेन पूर्वपक्षस्योपसंहारः ।

[46] तथा च पदार्थानां वाक्यार्थप्रत्ययाधानसामर्थ्यमिति शक्तिद्वयम् कल्पनीयम् । अन्विताभिधानवादिनस्तु प्रथमावगतानां पदानामभिधायकानां वाक्यार्थप्रत्ययोपजननपर्यवसिततात्पर्यवृत्तीनामेवाकाङ्क्षायोग्यतासत्तिरूपोपाध्युपाययगृहीतार्थान्तरान्वितस्वार्थाभिधानसामर्थ्यमिति लाघवम् । अतोऽर्थाभिधायिनां पदानामेव वाक्यधीहेतुभावः इति चतुरस्रम् ।

## सिद्धान्तपक्षस्योपपादनम् ।

अत्राभिधीयते—एष तावदौत्सर्गिको न्यायः—यदसति बलवद्बाधकोपनिपाते—

> सहकारिणि कार्ये च प्रत्यासन्नं हि कारणम् ।
> सति तद्भावभावित्वे तथा चार्थस्मृतिः पदात् ॥६॥

[47] भवति हि कुतश्चिन्मानसापराधादविदितपदार्थो विदितपदरूप-

---

46—'तथा च पदार्थानामि'ति । पदार्थोपस्थितेरन्वयप्रतीतिं प्रति कारणत्ववादिनां मते पदार्थानां वाक्यार्थबुद्धिजननसामर्थ्यमेकम् । परमपि पदानां पदार्थेषु संसर्गप्रत्ययजननसामर्थ्यमुत्पादयितुं सामर्थ्यम् ।

पदैरेवाभिहितपदार्थेष्वेव तादृशं सामर्थ्यमाधीयते, अनभिहितेषु सामर्थ्यादर्शनात् । अन्विताभिधानपक्षे चान्वितस्वार्थेषु पदानामेकसामर्थ्याश्रयणाल्लाघवमित्यर्थः ।

47—भवति हि । अपि चान्वयव्यतिरेकाभ्यामेतदवगम्यत इति तन्त्रूताधिकरणसिद्धान्तभाष्यस्याशयं वर्णयति—'भवती'ति ।

पदात् पदार्थस्मृतिर्भवति, पदार्थस्मृत्या वाक्यार्थ इति श्लोकस्यार्थः । अत्रेदमवधेयम्—प्राभाकरमीमांसकाः पदानि वाक्यार्थधीहेतव इति मन्यन्ते, भाट्टमीमांसकास्तु पदोपस्थापिताः पदार्था इति मतद्वये विशेषः । आकांक्षादित्रयस्य सहकारित्वन्तु मतद्वयेऽपि समानम् । शाब्दबोधापरपर्याय वाक्यर्थप्रत्ययस्य कार्यत्वञ्च । तत्र तावद् सर्वसंप्रतिपन्नं यत् असति बाधकप्रत्ययोपनिपाते सहकारिणः कार्यस्य प्रत्यासन्नं कारणं भवति

मात्रश्चेतनो न मनागपि वाक्यार्थमवगच्छति, अवगच्छति तु समभिव्याहृतपदकदम्बकोपजनितस्वार्थस्मृत्यनन्तरम्। तदमूषामेव [1]मानसीनामं स्वार्थस्मृतीनाम.काङ्क्षायोग्यतासत्तिसहकारिणीनाम् कारणत्वं वाक्यार्थप्रत्ययं प्रत्यध्यवस्यामः ॥

यदपि मतम्–स्वार्थस्वरूपस्मृ[2]तयोऽपि हि [3]वस्तुतस्तदर्थान्तर-सङ्गतार्थ.गोचरा न [4]स्वरूपगोचरमर्थान्तरमर्थान्तरेण घटयन्ति,

---

१. 'तदमूषामेव स्वार्थस्मृतीनामिति मु. पु. पा.। २. 'स्मृतयोऽपि हि वस्तुतदर्थान्तर' इति मु. पु. पा.। ३. वस्तुनस्तदर्थान्तरसङ्गतार्थ गोचरा—'वस्तुभूतेन ततोऽर्थान्तरेण सङ्गतोऽर्थो गोचरो यासांम्, तादृश्यः स्मृतय इत्यर्थः। ४. 'स्वगोचरमिति' मु. पु. पा.।

---

अन्वयव्यतिरेकाभ्याम्। ईदृशी च पदार्थोपस्थितिरिति, सैवान्तरंगत्वात् वाक्यार्थबुद्धेः कारणमिति स्वीकर्तुमुचितमिति। तथा चोक्तार्थसंग्रह-श्लोकाः—

'कारणञ्चेत् पदज्ञानमंगमेव पदार्थधीः।
पदार्थबुद्धेर्हेतुत्वे पदधीरुपकारिका॥
पदस्य सन्निधिः सिद्धयेत् स्वार्थेन सहकारिणा।
वाक्यार्थप्रत्यये कार्ये विप्रकर्षः प्रसज्यते॥
पदार्थबुद्धेः कार्येऽपि पदज्ञानेऽपि सन्निधिः।
इति सैवाभ्युपेतव्या वाक्यर्थज्ञानकारणम्॥
आकांक्षासत्तियोग्यत्वं सहकारीति निश्चितम्।
वाक्यार्थप्रत्ययः कार्यं वाक्यस्येत्यव्यवस्थितम्॥
व्यतिषंगो हि वाक्यार्थः स पदार्थेष्ववस्थितः,।
आकांक्षादित्रयमपि पदार्थेष्वेव वर्तते॥
अतोऽन्तरंगतायुक्तेः पदार्था एव कारणम्।
पदानान्तूपयोगित्वं पदार्थप्रतिपादने॥
यदि तद्भावभावित्वं पदेष्वेव प्रतिष्ठितम्।
अन्तरंगत्वयुक्तेश्च ततो बाधनमिष्यताम्॥
नत्वेवमस्ति खल्वेतन्मानसादपरावतः।
यदज्ञातपदार्थोऽयं विज्ञातपदमात्रकः॥
न मनागपि वाक्यार्थमधिगच्छति चेतनः।
पदोपजनितस्वार्थस्मृत्यनन्तरमेव तु॥
अधिगच्छति वाक्यार्थं स एव पुनरित्युत।, इति।

विभ्रमप्रसङ्गात् । न खलु प्रासादमात्रस्य[1] स्मरन्तः अस्मरन्तश्च तद्देशं पाटलिपुत्रं स्वरूपमात्रस्मृतया[2] माहिष्मत्यैनं घटयितुमीशते, ईशाना वा भवन्त्यभ्रान्ताः ॥

तदप्यसाम्प्रतम् । मा नाम भूदीदृशं स्मरणफलस्य[3] संस्कारस्य सामर्थ्यम्-यत् अनुभूताननु[4]भूतस्वरूपतदर्थान्तरसंसर्गविषयमाधत्ते स्मरणं समीचीन[5]मिति । सम्भवति तु [48]समभिव्याहृतपदावली-

१. 'स्मरतोऽस्मरतश्च तादृशपाटलिपुत्रमिति मु. पु. पा. ।

२. 'स्मृतयः' इति मु. पु. पा. ।

३. 'स्मरणफलसंस्कारस्य' इति मु. पु. पा. ।

४. 'स्वरूपतदर्थान्तरसम्बद्धद्वयविषय' इति मु. पु. पा. ।

५. (समीचीनमिति)—'संस्कारस्य स्वगोचरागोचरविषयकस्मृति-जनकत्वाभावेऽपि स्मृतेर्वक्ष्यमाणानुपपत्त्या तादृशप्रमितिजनकत्वमङ्गी-क्रियत इति यावत् । सामर्थ्यं कर्तृ, समीचीनम्–अबाधितं स्मरणं कर्म । आधत्ते–जनयतीत्यर्थः ।

प्रासादमात्रस्येत्यत्र 'अधीगर्थदयेशां कर्मणी'ति षष्ठी बोध्या । तस्याः वैकल्पिकत्वात् तद्देशमिति द्वितीया बोध्या ।

क्वचित् पाठः—अनुभूतस्वरूपतत्तदर्थान्तरसंबन्धविषयमिति । अत्र अनुभूतस्वरूपत्वेन स्वरूपमात्रस्मृतत्वमपि विवक्षितमिति तदर्थो बोध्यः ।

48—'समभिव्याहृते'ति । यदेतदर्थस्वरूपस्मृतीनां समभिव्याहृतेत्यादि-विशेषणत्रयं दत्तम् । तेन समभिव्याहारान्यथानुपपत्त्या पदार्थं वाक्यार्थ-बोधः क्रियत, इति । तत् अन्विताभिधानवादिनां प्राभाकराणाम्, अभिहितान्वयवादिनां भाट्टमीमांसकानाञ्च समानयोगक्षेममिति न तत्साधनमपेक्षणीयमिति भावः । तथा चापजुं विमलापञ्चिकायां शालिका-चार्यः, यावन्ति पदानि वाक्ये, तावन्ति श्रुत्वा न्यायानुसारेण वचनव्यक्ति-विशेषमवसायाऽर्थोऽवगम्यते अ,पं.पृ ३८५, ।

तथैतस्मिन्नर्थे इमानि वार्तिकान्यनुसन्धेयानि—

तेऽपि नैवास्मृताः यस्मात् वाक्यार्थं गमयन्ति नः ।
तस्मात् तत्स्मरणेष्वेव संहतेषु प्रमाणता ॥
अपेक्षया हि सर्वोऽसौ संबन्धं प्रतिपद्यते । ७-३३५.
'यस्य येनार्थसंबन्धो दूरस्थस्यापि तस्य तत् ॥

लब्धजन्मनामर्थस्वरूपस्मृतीनामाकाङ्क्षादिरूपसहकारिभेदोप[१]धानाहित'दशान्तरोपात्तप्रमाणभावानामनन्तरदृश्यमानमानान्तरानधिगतस्वार्थपरस्परसम्बन्धनिर्भासप्रकाशफलानाम् ।

अन्यथा प्रत्यभिज्ञानमपि नोपजायेत । तत्रापि देशका[२]लादिभेदोपहितस्वरूपसंवेदनजन्मा संस्कारः, तदाहिता वा स्मृतिः कथं स्वार्थं देशान्तरेण, कालान्तरेण वा घटयेत् । तत्र[३] इन्द्रियादिसहकारिसमवधानप्राप्तदशान्तरयोरेतयोः पूर्वापरदेशकालानुगतैकवस्तुगोचर प्रत्यभिज्ञा[४] प्रसवसहः कोऽपि महिमा तादृगभ्युपेतव्यः ॥

स 'चेहापि समानः, अन्यत्राभिनिवेशात् । 'न च देशकालावस्थानानात्वेऽपि' वस्तुनो रूपं नानेत्युपपादितम्' न्यायकणिकायाम् लखीर (पृ १२७, १३४,।)

१. 'दशान्तरोपपादितप्रमाणभावानामिति मु. पु. पा. ।

२. 'देशकालोपहित' इति मु. पु. पा. । 'देशकालभेदोपहितेति ३ पु. पा. ।

३. 'तत्र हि इन्द्रियादि' इति मु. पु. पा. ।

४. 'प्रत्यभिज्ञानस्य प्रसवसहः' इति मु. पु. पा. ।

अर्थतो ह्यसमर्थाना मानन्तर्यमकारणमिति ।,
'पदार्थानां सामर्थ्यं गम्यमानमपह्नुतम् ॥
आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चति ।'

49—'सहकारिभेदे' । यथा प्रत्यक्षे विषयेन्द्रियसन्निकर्षः सहकारी, यथा वानुमाने व्याप्तिस्मरण, च सहकारिविशेषः, तथैव शब्दे आकांक्षादित्रयम् विशिष्टसहकारीत्यर्थो ज्ञेयः ।

50—'प्रत्यभिज्ञानेति' । अत्रेदं बोध्यम्—अत्र पक्षद्वयमस्ति, तत्र संस्कारपक्षे प्रत्यक्षप्रत्यभिज्ञाने प्रथममालोचनज्ञानम्, तदनन्तरं संस्कारोन्मेषः, ततः स्मरणं जायमानम्, तत्रेन्द्रियसंयुक्तत्वात्स्मर्यमाणस्य इन्द्रियसदहकृतेन संस्कारेण प्रत्यभिज्ञानं जायत इति । स्मरणपक्षे त्वालोचनानन्तरं संस्कारोन्मेषः ततः स्मरणम् , तदनन्तरमिन्द्रियसंयुक्ते स्मर्यमाणे वस्तुनि स्मरणमेवेन्द्रिय सहकृतं प्रत्यभिज्ञानं जनयतीति चरमः पक्ष इति बोध्यम् ।

51—इह—पदार्थस्मृति-तत्संस्कारेष्वित्यर्थः । तदयमर्थः—अभिनिवेशविषयो हि भवतां प्रत्यभिज्ञाविषये महिमा, इह नेति महान् विशेष इत्युपहसन्नाह—'अन्यत्राभिनिवेशादि'ति । अभिनिवेशविषयत्वमात्रन्त्वसमानमेवेत्यर्थः ।

## शंका

ननूक्तं न मानान्तरानुभूतानामर्थरूपाणां वाक्यार्थधीप्रसवसामर्थ्य-मुपलब्धम्, उपलम्भे वा सप्तमप्रमाणप्रसङ्गः, आगमस्य वा तत्रै-वान्तर्भावः, तदेव प्रत्यक्षादिभिस्सह तुल्यकक्ष्यतयोपन्यसनीयम्, न त्वागमस्तद्भेदः[४]। "न हि ब्राह्मणयुधिष्ठिराविति प्रयुञ्जते, प्रयुञ्जते तु ब्राह्मण-राजन्याविति, वसिष्ठ-युधिष्ठिराविति वा लौकिकाः।

न च भेदान्तरोपन्यासेन भेदान्तरमुपन्यस्तं भवति। तदयम् समस्तमानलक्षणप्रवृत्तो मानतुषस्यापि परित्यागे तेनैव सह स्वकौश-

---

१. 'ननूक्तं न मानान्तरतोऽनुभूतस्मृतानामर्थरूपाणाम्' इति मु. पु. पा.। 'ननूक्तं च मानान्तरतोऽनुभूतस्मृतमर्थरूपाणामिति २ पु. पा.।

२. 'सप्तमप्रमाणाभ्युपगमप्रसङ्गः'। 'प्रत्यक्षानुमानोपमानशब्दार्था-पत्त्यनुपलब्धिव्यतिरिक्तस्यार्थस्वरूपस्यापि प्रमाणतापत्तिरित्यर्थः।

३. आगमस्य चात्रैवान्तर्भावे प्रत्यक्षादिभिस्तुल्यकक्ष्यतया तदेव-उपन्यसनीयम्' इति मु. पु. पा.। ४. (तद्भेदः) 'अर्थस्वरूपस्मारकत्वा-दागमस्यार्थस्यैव प्रमितिजनकत्वात्पूर्वोदाहृते श्वेतिम-चाक्षुषप्रत्यक्ष-खुरनिक्षेप श्रावणप्रत्यक्षदशाया'मश्वो धावती'ति धियोऽर्थमात्रप्रभवत्व-स्वीकारे आगमस्य क्वचिदर्थस्मृतावुपयोगेऽपि, तस्याव्यापकत्वादिति-भावः।

५. 'न हि लोका ब्राह्मण' इति मु. पु. पा.।

६. 'युधिष्ठिराविति वा। न च' इति मु. पु. पा.।

---

यद्यभिनिवेशं मुक्त्वा पर्यालोच्यते, तदा समानः। परमार्थतस्तु न पदार्थ-शक्तिकल्पनामन्तरेण वाक्यार्थज्ञानस्योपपत्तिरिति तात्पर्यमनुसन्धेयम्।

'न वस्तुनो रूपं नाने'ति। अत्रेयं विषयपरिशुद्धिः—पूर्वापरदेशकालानुगतै-कवस्तुगोचरं प्रत्यभिज्ञानमित्यसहमानो मुधैवायं प्रस्ताव इत्याशंकते-तथेति—सति कुड्ये चित्रकर्म संभवति, नासति, न तावत् प्रत्यभिज्ञा नाम तत्तेदन्तावगाहि पूर्वापरदेशकालानुगतैकवस्तुगोचरं ज्ञानान्तरं संभवति।

लमपि त्य जेदिति प[2]दाहितानुभवानां वा पदाहितस्मृतिरूपाणां वा अर्थरूपा[3]णामयमीदृशः[4] सामर्थ्यातिशयः, यतोऽर्थधियः[5] उदयः इत्यकामेनाप्यभ्युपेयम् ।

तथा च तिस्रः शक्तयः कल्प्येरन्, द्वे वा । पदानां हि तावदर्थरूपा[6]भिधानरूपा शक्तिः, तदर्थरूपाणामन्योन्यान्वयशक्तिः, तदाधानशक्तिश्चापरा पदानामेवेति । स्मारकत्वपक्षे तूक्तं शक्तिद्वयम् । अन्विताभिधाने तु पदानामेकैव शक्तिः, तत् कल्पनालाघवात् एतदेव न्याय्यमिति ॥

## तन्निरासः

अत्रोच्यते—सत्यम्,—

कल्पनालाघवं यत्र तं पक्षं रोचयामहे ।
तदेव कतरत्रेति निपुणं सम्प्रधार्यताम् ॥१०॥

एकैव किल शक्तिरन्विताभिधानवादिभिरन्वितस्वार्थगोचरा अभिप्रेयते पदानाम्, [7]न तु विशेषे । तदप्यभिधीयते सेयं न तावदन्वयमात्रविषया । तन्मात्रविषयत्वे, तस्याविशेषात् सर्वशब्दानां पर्यायताप्रसङ्गः । नापि व्यतिषक्ताभिधायि पदं न व्यतिषङ्गस्य वाचकम्,

१. 'परित्यजेतेति मु. पु. पा. ।

२. पदाभिहितानुभवानां वा—'बौद्धपदार्थानामेव शाब्दधीविषयतापत्ते' इति ।

३. 'अर्थरूपाणाम्' इति मु. पु. नास्ति ।

४. ( अयमीदृशः )—'पदाभिहितानुभवानामिति यदीदृश इति च २ पु. पा. ।

५. 'अन्वयधियः' इति मु. पु. पा. ।

६. 'अर्थरूपानुभवजननशक्तिः अर्थरूपाणामन्योन्यान्वयप्रत्यायनशक्तिः' इति मु. पु. पा. ।

७. (विशेषे)—अन्विते, न तु विशिष्ट इति ३ पु. पा. । २. (एकैव किल तदप्यभिधीयते)—'स्ववाच्यप्रतियोगितानुयोगिताकत्वविशिष्ट' तत्त्वेन तात्पर्यविषये वा, न तु सम्बन्धत्वव्याप्यतत्तद्रूपावच्छिन्ने, नानार्थत्वप्रसङ्गादित्यर्थः ।

"जात्यभिधायकमिव व्यक्तेः, व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्य व्यतिषक्तानां च स्वरूपतो भेदात् नैकार्थ्यं पदानामिति साम्प्रतम्। व्यतिषक्त इति स्वरूपमात्रं वोपलक्षयेत, व्यतिषङ्गवद्वोच्येत। तत्र [1]रूपाभिधानजन्मा ख्यातिः जात्यभिधानजन्मेव व्यक्तिम्, न व्यतिषक्तमपि गोचरयितुमर्हति। न हि यथा आकारिणमन्तरेणाकारोऽशक्यनिरूपण इति शब्दसामर्थ्यगोचरत्वमनापन्नोऽप्याकार्याकाराभिधायिशब्दजनितविज्ञानविषयभावं[2] नातिपतति, तथा अर्थस्वरूपमन्वयमन्तरेण दुरधिगमम्, येन स्वगोचरसामर्थ्यजन्मनि विज्ञानेऽन्वयमपि समर्पयेत्, तद्रूपस्यान्वयमन्तरेणापि शक्यनिरूपणत्वात्। नान्वयं विना तद्रूपम् क्वचिदपीति चेत्? तत्किं लिङ्गमपि न लिङ्गिनं विनेति, तदपि तन्निरूपणाधीननिरूपणमस्तु, तथा न लिङ्गत्वमपीति अनुमानमुत्पन्नसङ्कटं आप[3]द्येत। तस्मादन्वितं शब्दसामर्थ्यगोचर इत्यभ्युपगच्छता अर्थस्वरूपम्, तदन्वयश्च तद्विषयतयाऽभ्युपगते भवतः।

## अभिहितान्वयवादस्य लाघवाय स्वीकारः

तदिह यदि पदसामर्थ्यस्य स्वरूपमात्रगोचरतयान्वयधिय उदयमुपपादयितुं शक्ष्यामः, ततस्तावतैव परितोक्ष्यामः, तदन्वयविषयत्वकल्पनायाश्च विरंस्यामो लाघवाय, अथ तु सहस्रेणाप्यनुस[4]रणप्रयत्नैः स्वार्थरूपमात्रोपक्षीणप्रवृत्तिनि पदसामर्थ्ये वाक्यार्थबुद्ध्युदयासम्भवः, ततः परावृत्य शब्दसामर्थ्यस्यैवोभयविषयत्वं कल्पयिष्यामः। किं [5]प्राप्तम्?

---

१. रूपाभिधानजन्मा ख्यातिः 'स्वरूपमात्रनिरूपितशक्तिज्ञानमित्यर्थः'।

२. नातिपतति—'शुक्लादिशब्दगतशक्त्यविषयोऽप्याकारी गुणाश्रयो गुणमात्रवाचकपदजन्यबोधविषयतां न मुञ्चतीत्यर्थः।

३. आपद्यते—लिङ्गत्वस्य वा व्यापकाधीननिरूपणत्वेन तज्ज्ञानकाल एव व्यापकज्ञानाभ्युपगमे पक्षधर्मताज्ञानोत्तरजायमानप्रमितिविषयतानुपपत्तेरिति भावः'। प्रकरणोक्तमनुवदति, जात्यभिधायकमिवेति।

४. 'अनुसरणप्रकारेण प्रयत्नानामर्थस्वरूपमात्रोपक्षीणवृत्तीनि' इति मु. पु. पा.। ५. 'किन्तावत्प्राप्तम्' इति मु. पु. पा।

---

52—प्रकरणोक्तमनुवदति—'जात्यभिधायकमिवे'ति।

वाच्यरूपाविनाभूतव्यतिषक्तदशापराः ।
समभिव्या[1]हृते (तेः) शब्दा भवन्त्यनुपपत्तितः ॥११।

सामर्थ्याधिगमो हि भावानां न माना[2]न्तरजन्मा, किन्तु कार्योत्पत्त्यन्यथानु[3]पपत्तावेवायततो । तदियमपि व्यतिषङ्गप्रतीतिः कथमपि दृष्टादृष्टप्रकारभेदसहायादुपपद्यमानोत्पत्तिर्न पदसामर्थ्यमात्मनि प्रमाणयितुमर्हति । 'अनन्यलभ्यः शब्दार्थः' इति हि त्रैविद्यवृद्धाः । अतः पवाख्यातादौ कर्त्राद्यभिधायितां नाद्रियन्ते । लभ्यते च समभिव्याहारान्यथानुपपत्त्या पदानामन्विताथंपराणां स्वाभिधेयार्थरूपसमवेतान्विताव स्थाप्रत्यायनं लक्षणया । न हि पदान्यसमभिव्याहृतानि स्वाभिधेयप्रत्ययमात्रेण पर्यवसातुमीशते । न हि लौकिकाः पदार्थमात्रप्रत्यायनाय प्रवर्तन्ते । प्रतिपित्सितं खल्वेतदिति प्रतिपादयिष्यन्तः पदान्युच्चारयन्ति । अवुभुत्सितावबोधने त्वनवधेयवचनतया नामी लौकिकाः, नापि परीक्षका इत्युन्मत्तवदुपेक्ष्येरन् । न च भूयो भूयः,समधिगतं परं पदार्थमात्रं वुभुत्सन्ते । तदनधिगतमर्थमवगमयितुमनसः समभिव्याहरन्ति वृद्धाः पदानि । तदयं समभिव्याहारः पदानामनधिगतार्थप्रत्यायनप्रयुक्तः,[4]तमन्तरेणानुपपद्यमानः स्वाभिधेयसमवेतामन्वितावस्थां लक्षय[5]त्यनधिगतचरीम् । तदुक्तम्—

'विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जने ॥' इति ॥

तदेवमनुपपद्यमानसमभिव्याहारपद[6]जाताहितस्मरण प्रत्यासत्त्या[7]

१. 'समभिव्याहृतेः' इति मु. पु. पा. ।
२. 'मानान्तराधीनजन्मा' इति मु. पु. पा. ।
३. 'अनुपपत्तावायतते' इति मु. पु. पा. ।
४. 'तदन्तरेण' इति मु. पु. पा. ।
५. 'अनधिगतचरीमन्वितावस्थां लक्षयति' इति मु. पु. पा. ।
६. 'पदजातजातस्मरणस्वार्थप्रत्यासत्त्या' इति मु. पु. पा. ।
७. (तदेव–प्रत्यासत्त्या) 'अनुपपद्यमानः संसृष्टतात्पर्यकत्वाभावेऽनुपपन्नः पदान्तरसमभिव्याहारो यस्य' तादृशेन पदजातेन पदसमूहेन जातं स्मरणं यस्य, तादृशस्यार्थस्य प्रत्यासत्त्या—सम्बन्धेनेत्यर्थः ।

53—तात्पर्यटीकायाम्, तत्त्वकौमुद्याञ्चेदृश्येवानुपूर्वी दृश्यत इति ।

[1]दृश्यमानयाऽर्थंगताकाङ्क्षासत्तियोग्यतासध्रीचीनया लक्ष्यमाणा अन्विताचस्था नात्मनि पदसामर्थ्यं प्रमाणयति, [2]अन्यलभ्यत्वात्।

१. 'दृश्यमानया दृश्यमानार्थंगताकाङ्क्षा-योग्यता-सन्निधि' इति-मु. पु. पा.।

२. 'अनन्यलभ्यत्वादिति २ पु. पा.। इति।

## [ ४७ पृष्ठादग्रिमोंऽशः ]

अस्यापि क्षणिकवस्त्वन्तरविषयकत्वात्। एकत्वाभासस्तु समारोपमात्रमिति तन्मतस्थितिः। न च तद्दृष्टान्तेन पदार्थस्मृतिषु तथात्वकल्पना युज्यते। समेषां भावानां क्षणिकत्वात्। यत् सत् तत् क्षणिकमिति व्याप्तेः। एवञ्च स्मृतिगतानां पदार्थानां शाब्दबोधक्षणेऽवस्थितेरसंभवात्। स्मृत्यभिमानस्तु प्रत्यभिज्ञायामेकत्वप्रतीतेरिव भ्रान्तित्वात्, अतएव वाक्यार्थः शाब्दज्ञानं प्रतिभामात्रमिति प्रतिपेदिरे, विकल्पनामात्रो वेति-विपश्चितः। अतोऽनवसर एवायं विचारः—किं पदान्येव वाक्यार्थबुद्धिनिमित्तं आहोस्वित् पदार्थस्मृतयः इति। काकदन्तपरीक्षावन्निष्फल इति।

तस्योत्तरं न्यायकणिकावलम्बनेनाह—न चेति।

चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मन १५।

विधिविवेककारिकाव्याख्यानभूतगद्यमयस्य "क्षणाविवेकप्रतिभासनात् अभेदप्रतिभासनात्, क्षणिकत्वप्रतिक्षेपात्" इत्यादिग्रन्थसन्दर्भस्य व्याख्यायां न्यायकणिकायां क्षणभंगनिराकरणपर्वणि। नन्वस्त्वभेदप्रतिभासः, न पुनरक्षणिकतामावहति भावानाम्, बाधके सति समारोपगोचरत्वात्, अस्ति हि बाधकं यत् सत् तत् क्षणिकम्, यथा घटादि, संप्रविवादास्पदीभूतः शब्दादिरिति स्वभावहेतुः। भावमात्रानुबन्धि साध्याविषयत्वादि-(न्या, क.पृ.१२७) त्यादिना। तथा च स्वयमेव न भवन्ति भावाः द्वितीये क्षणे इति सिद्धःक्षणभंग एतेषामित्यन्तेन क्षणभंगपक्षमुपन्यस्यति स्म।

ततः क्षणिकत्वप्रतिक्षेपादिति (१३३–१४०) विधिविवेकग्रन्थमवतार्य—तस्मात् क्षणिकत्वसाधनानुमानप्रतिक्षेपादबाधितं प्रत्यभिज्ञानं स्थापयति भावानितिसिद्धमि(१४०)ति तन्मतमाधूनितम्।

तत्रेदमाकूतम्। न तावत् सत्त्वं क्षणिकत्वसाधनसमर्थम्। क्षणिकत्वे च व्यवस्थानुपपत्तेः असाधारणत्वादित्यादिना न वस्तुनो रूपं नाना न प्रतिक्षणं भिन्नमित्येतदुपपादितम्। एवञ्च सर्वं समञ्जसमिति।

स्यादेतत्। अस्तु लौकिकानां पदसङ्घातानां प्रेक्षावत्पुरुष-सन्दृब्धानां सन्दर्भितुरभिप्रायमनुरुध्यमानानामनुपपत्त्या अनधिग-

---

परेषामिति। पदत्वमभ्यासस्य किं वा दुष्करत्वमिति प्रतिपादनायाव-तारितम्, बाध्या अपि इत्यादाय व्याचक्षाणः ऋषिपुत्रपरमेश्वरस्तृतीय-स्तस्य तात्पर्यमपि वर्णयति, बाह्या अपीत्यनेन। मानेन यथा मेयधीर्भवति एवमभ्यासस्य दुष्करत्वाभावोऽपि सर्वतन्त्रसिद्धान्त एवेति दर्शितमिति। अथवा नास्तिका अप्यत्र विप्रतिपद्यन्ते, तथा सति आस्तिकेषु तत्प्रति-पादनक्लेशो मुधैवेति ध्येयम्, इति।

## शेषकृष्णमतम्

शेषकृष्णस्तु पदावधारणोपायमित्यादिश्लोकमित्थं व्याचचक्षे। तथाहि—न केवलमेकार्थप्रत्ययः एवैकं पदमिति व्यपदेशस्य निमित्तम्। किन्तु क्रमादयो-ऽपीत्यर्थः। अर्थात् पूर्वपूर्ववर्णानुभवाः क्रमवन्तः, तत्क्रमवत्तया वर्णेष्वप्येकस्मृ-तिसमारोहिष्वौपाधिकः क्रमोऽभ्युपगन्तव्य इति। क्रमेणोदाहरणानि रसः, सर इत्यत्र क्रमः। करः करञ्ज इत्यत्र न्यूनातिरिक्तत्वे इन्द्रशत्रुरित्यत्र स्वरः। सा रंगमागता नर्तकीति वाक्यम्। परमे व्योमन्निति श्रुतिः, गृभ्णामीति हृगृह्योर्भश्छन्दसीति 'पाणिनीयस्मृतिः' इति।

## सोमनाथदीक्षितमतम्

सोमनाथदीक्षितस्तु आकृत्यधिकरणशास्त्रदीपिकायामित्थं व्याचष्टे स्म, तथाहि—पचत इतिपदं नामधेयत्वेन, आख्यातत्वेन च संभाव्यमानं भोक्तु-कामः पचते इत्यत्राख्यातम्। पचते दक्षिणां देहि इत्यत्र शत्रन्तं नामेति च-समभिव्याहारान्निश्चीयते इति, पदान्तरसमभिव्याहाररूपं वाक्यं पदभेदा-वगमोपायः। अत्र श्रुतिशब्देन प्रथमान्ताख्यातपदयोर्यत् सामानाधि-करण्यम्, तद्विवक्षितम्। उक्तञ्च वाक्याधिकरणन्यायरत्नाकरे पार्थसारथि-मिश्रेण। किमियं श्रुतिः ? सामानाधिकरण्यमित्यर्थः।

ननु निरवयवस्य वाक्यस्य विवर्तो वाक्यार्थः, नतु पारमार्थिकः, अतः पदानि पदार्थस्मृतयो वा शाब्दबोधहेतुरिति निरूपणं निरवकाशम्, निरवयववाक्यविवर्तत्वेन तन्निमित्तत्वात्। न च क्रिया-कारकसंसर्गादयो वस्तु-भूताः सन्ति। अतएवोत्तरत्र संसर्गपरीक्षायां पुनः प्रकारान्तरेण प्रत्यवतिष्ठते-पर इत्यादिनोपान्यस्यतिस्म। यथा—नन्वेवंजातीयकेष्वेवाभेदबुद्धेरेकं शब्दात्मकमुपागमन् धीराः। तथाहिक्रिया-कारक-गुण-गुणि-प्रयोजन-प्रयोजनि-

तार्थलक्षणापरत्वम्, वैदिकानान्तु पुरुषासन्दृब्धानामबुद्धिपूर्वाणां नानुपपत्तिः, यया[1]न्वितावस्थां लक्षयेयुः। य एव लौकिकाः शब्दास्त एव वैदिका अपीति चेत्? तत्किं 'गङ्गायां घोष.' इति गङ्गाशब्दो लाक्षणिक इति, गङ्गायां पयांसि यादांसि गङ्गायामित्यत्रापि स एव लाक्ष-

१. यया-तात्पर्यानुपपत्त्येत्यर्थः।

प्रभृतिषु सर्सागि,--समूहिषु शिंशपा-अशोक-चम्पकादिषु संसर्गिसमूहश्चैको वस्तुभूतश्चकास्ति, चकासति च शशविषाणालातचक्रादयोऽवस्तुभूताः, सेयमेवंविधेषु वस्तुबुद्धिरेकबुद्धिश्चैकमनवयवं शब्दात्मानमेवावलम्बते इत्यादिना शाब्दिकानां मतमुपन्यस्य परिहरति। न, अन्यथा सिद्धेरित्यादि-ग्रन्थेन। देशकालावस्थाभेदेऽपि वस्त्वेकोन वेति प्रतिपादितम्। एतदेवानेन ग्रन्थेन क्रियते ग्रन्थक्लेशाभावायेति बोध्यम्।

'सप्तमप्रमाणप्रसग' इति। अत्रेदं बोध्यम्-अन्विताभिधानवादि-भिरुक्तं यदि श्वेतिमादीनां प्रमाणान्तरेणोपस्थितानां शाब्दबोधाभ्युपगमे, तस्मिन्नन्वये शब्दमूले प्रमाणमपरमेषितव्यं स्यात्, एवञ्च सप्तमप्रमाण प्रसंग इति दूषणमापादितम्। तदविचारितरमणीयम्। यतो हि शास्त्रं शब्द-विज्ञानादसन्निकृष्टेऽर्थे विज्ञानमिति किल वृत्तिकारग्रन्थे भगवता भाष्य-कृताऽभिहितम्। एवंवादिनां मते मा भूत् सप्तमं प्रमाणम्। शाब्दं खलु शास्त्रं पदार्थस्मृतेरसन्निकृष्टेऽर्थे विज्ञानमित्येव लक्षयितव्यमापततीत्याशयं मनसि निधायाह--आगमस्य वा तत्रान्तर्भाव इति। तत्र–सप्तमे प्रमाणे इत्यर्थः। पदार्थः खलु तृतीयं प्रमाणं स्यात्, तत् पञ्चविधम्, प्रत्यक्षादिपञ्चक-जनितानुभवप्रसूतत्वात्। एवञ्च चक्षुरादेः प्रत्यक्षत्वमेव, नतु प्रमाणान्तर-त्वमेव, प्रत्यक्षान्तर्भावात्। प्रमाणगणने प्रवृत्तैर्वृत्तिकारादिभिः पदार्था-ख्यमेव प्रमाणमुपन्यसितव्यम्, नत्वागम इति भावः।

न च भेदान्तरोपन्यासेनेति। अस्यायमाशयः—भेदानां परस्परं व्यभिचारित्वान्नैकोपन्यासेनाप्यसिद्धिः। सामान्योपन्यासे तु विशेषाः यथोक्तं विधिविवेक-न्यायकणिकयोः "नन्वेवंजातीयकेष्वेवाभेदवस्तुबुद्धेरेकं शब्दा-त्मकमुपागमन्। नह्यवस्तुषु संसर्ग–समूहात्यन्तासदादिषु संसर्गिषु वा नानात्मसु एकवस्तुप्रतिभासः संभवति, विनैकस्य शब्दात्मनः प्रत्यासात्-परिणामात् विवर्ताद्वेति। न। अन्यथासिद्धेः। संसर्गस्तावद्वाक्यार्थलक्षणः कारको-पसर्जनक्रियाप्रधानोऽतुल्यप्रधानसंसर्गो" (वि.वि. पृ २८६-२६४)

णिकोऽस्तु। अनुपपत्तिविरहान्नैवमिति चेत्? समानमेतदबुद्धिपूर्वकेषु वैदिकेष्वपि। [1]अथ परस्यापि वैदिकेषु पदसन्दर्भेषु कुतोऽनधिगतार्थबोधनम्। अर्थान्तरान्विते स्वार्थे पदसामर्थ्यावगमाल्लोके

---

१. अथपरस्यापि—'अन्विताभिधानवादं दूषयति—अथेति। लोकेऽर्थान्तरान्वितस्वार्थे पदानां सामर्थ्यग्रहादगृहीतसङ्गतिकस्य स्वर्गापूर्वादेर्वैदिकबोधविषयत्वासम्भवादिति भावः।'

सर्व एवोपन्यस्ता भवेयुः, अतस्तदेवोपन्यसनीयम्, न त्वागमस्तद्भेद इति।

ननु मा नाम भूत् विशेषान्तरमुपन्यस्तम्। लक्षितं स्वतन्त्रोपयोगितयाऽपेक्ष्यमाणमागमप्रमाणमितिमत्वा तदेवोपन्यस्तमित्याशंक्य परिहरति—तदयमित्यादिना स्वकौशलमपि त्यजेदि'त्यन्तेन। तस्य परित्यागं कुर्वन्नेव तद्वत् स्वकौशलमपि त्यजेदेवेत्यर्थः।

समस्तमानलक्षणे प्रवृत्तः। अयं भाष्यकारः परीक्षामिषेण लक्षणानि वदन् समस्तप्रमाणलक्षणनिरूपणे प्रवृत्तः, प्रत्यक्षाद्यनुपलब्ध्यन्तलक्षणकथनात्। न तु चोदनामात्रलक्षणप्रवृत्तः इत्याशयो बोध्यः।

मानसुषस्यापीति। किंपुनरत्र सप्तमस्य परित्यागे षट्सु वा तृतीये षष्ठांशमात्रलक्षणेन पञ्चानामप्यंशानां परित्यागे इति अपिशब्देन सूचितमित्यर्थः।

अनुमानात्,अर्थापत्तेर्वा तदनवगमात्। अयमाशयः—तथा हि यद्यपि अन्विताभिधाने पूर्वोक्तरीत्या अन्योन्याश्रयदोषो न भवति, तथापि अभिहितेभ्यः पदार्थेभ्य एव संसर्गप्रतीतिसिद्धौ पदानां सामर्थ्यकल्पने गौरवमापद्येत, इत्याशंक्य दृष्टान्तमुखेन शंकामपनुदन् स्वपक्षं स्वहस्तयति गुरुमतानुसारी, श्वेतोऽश्वो धावति, इत्यत्र दृश्यमानं श्वेतिमारूपमव्यक्तरूपं हेषा-खुरनिक्षेपशब्दौ च श्रूयमाणौ च श्वेतोऽश्वोधावतीति अन्वयबुद्धिं जनयन्ति। तत्रायं विकल्पो द्वेधा किमेकनिष्ठतयाऽवगतमेतत् त्रितयं संसर्गबोधकम्, आहोस्वित् विशकलिततया इति। तत्र-प्रथमपक्षे पर्यवस्यति। यत्र ह्येतत् त्रयमेकत्रावगतम्, तत्राश्वत्वं दृष्टमिति व्याप्त्या बोधकत्वादनुमानं स्यादिति, न चरमः पक्षः क्षोदक्षमः। विशकलिततया ज्ञातानामर्थान्तराभावे संप्रधारितेऽनुपपत्त्याऽश्वत्वबोधकत्वात् अर्थापत्तित्वं स्यात्। यदि चार्थान्तराभावोऽपि न निश्चितः तदाऽनध्यवसाय एव, तस्मात् पदार्थेभ्यस्संसर्गप्रतीतेरनुपपत्तेः पदा-

वैदिकानां पदानां लौकिकेभ्योऽनन्यत्वादिति चेत्। तन्न। 'लौकिकानि वचनानि पुरुषाधीनरचनतया तदभिप्रायानुरोधीनि नान्वितार्थपरतया तमवगमयितुमीशते इति, वृथा[2] अर्थान्तरान्वितस्वार्थकल्पना तेषाम्।

---

१. लौकिकपदानि हि पुरुषाधीनरचनया तदभिप्रायानुरोधेनान्वितार्थपरतया' इति मु. पु. पा.।

२. 'किमर्थान्तरान्वितस्वार्थाभिधानकल्पनया' इति मु. पु. पा.। पदैरर्थस्वरूपमात्रोपस्थितौ वक्तृतात्पर्यज्ञानवशात् तत्संसर्गबोध इति भावः।

---

नामेव संसर्गप्रतीतिहेतुरित्यभ्युपगन्तव्यमिति भावः, इति। अपि च पदार्थसामर्थ्यजत्वाभ्युपगमे। अयंभावः—वाक्यार्थप्रत्ययस्य पदार्थसामर्थ्यजन्यत्वाभ्युपगमे शब्दाजन्यत्वे शाब्दबोधस्य संसर्गप्रतीतेः अप्रामाणिकत्वं स्यात्, अथवा पदार्थाख्यसप्तमप्रमाणस्वीकारो वा स्यादिति पूर्वपक्षस्याशयो बोध्यः।

तस्येदं समाधानम्। विशकलितपदार्थमात्रस्मृतीनामदर्शनेऽपि पदस्मारितपदार्थस्मृतीनां, स्मृतानां वा पदार्थानां वाक्यार्थप्रत्ययहेतुत्वं संधार्यते, अन्वयव्यतिरेकौ तद्भूताधिकरणन्यायोक्तौ अनागतावेक्षणन्यायेन प्राक् प्रदर्शितौ। अपि च यथा अन्यत्र विभिन्नविषयनिष्ठतया दृष्टसामर्थ्ययोश्चक्षुरिन्द्रियसंस्कारयोः सहकारिवशात् प्रत्यभिज्ञायां सोऽयं देवदत्त इत्यादावेकार्थविषयत्वं भवति, तथैव प्रकृतेऽपि परस्परसहकारितया संभाव्यत इति।

प्रकृतविषयदाढर्च संपादनाय स्थूणानिखननन्यायेनोपगताबोधकप्रमाणानां मध्ये लिङ्गप्रकरणस्थानां शब्दरूपाणां शब्दान्तर्भावेणैव विनियोजकत्वम्, साक्षात्। बलाबलाधिकरणविरोधात् तत्र लिङ्गादीनां स्वपूर्वपूर्वं प्रमाणकल्पनापूर्वके विनियोजकत्वादिति शब्दस्यार्थस्यापेक्षितोऽर्थः शब्देनैव समर्पणीयः, न प्रमाणान्तरेणेति, इति भाट्टमतरीत्या अन्विताभिधानवादिनो प्राभाकरप्रस्थानानुसारेण लिङ्गप्रकरणादिकमुदाहरणे भवत्येव। श्रुतिकल्पनाव्यतिरेकेणैव लिङ्गादीनि विनियोजकानीति हि प्राभाकरमीमांसकानां मतम्। अयमर्थो नयविवेक-तत्त्वयोर्विशदः। यथा

तथा सति वैदिकार्थप्रतीतिरनुपपन्नेति चेत्—मोपपादि किं नश्छिन्नं नैयायिकानाम्। मानानुसारि हि प्रयोजनम् न तु तदनुसारि मानम्। तस्मात्स्वपक्षदृष्टिपक्षपातं परित्यज्य,आस्थायास्तिकपथमृजुमनुसरावो निमित्तमप्रत्यूहमस्या वैदिकार्थप्रतीतेः। तत्रानादिवृद्धव्यवहारपरम्परायां पदतदर्थसम्बन्धबोधोपाये सति असत्यपि सम्बन्धरि शब्दादर्थप्रतीतेरुपपत्तेः। अर्थभेदनिरूपणस्य च ज्ञानभेदनिबन्धनत्वात् ज्ञानभेदस्यार्थाभेदात्तदनभिधानेऽभिधानाभावात्, अर्थभेदाभिधाने वा तत एव सिद्धेस्तदभिधानानुपपत्तेः, तद्धेतुतया तु तत्कल्पने तात्वादिव्यापारस्यापि वाच्यत्वप्रसङ्गात् स्वाभा-

---

किंप्राप्तम्—किंयुक्तमित्यर्थः। किमभिहितान्वयवादस्संभवति, संभवेऽन्विताभिधानवादः परित्याज्यः, यद्यभिहितान्वयवादो न संभवति, तर्हि अन्विताभिधानवादस्वीकार इति विचारणीयमित्यर्थः। तत्र पूर्वपक्षस्य पूर्वमेवोपन्यस्तत्वात्, तन्निरासेन सिद्धान्तवर्णनमेवात्रोपेक्षितमिति मनसि निधाय सिद्धान्तमाह—वाच्येति। अत्र श्लोकेऽनुपपत्तित इति पञ्चमं प्रमाणमुपन्यस्तम्। तत्र चतुर्णां परित्यागे पञ्चमस्योपन्यासे कारणमुपन्यस्यति सामर्थ्याधिगमः…आपतत इति।

त्रैविद्यवृद्धाः—भाष्यकाराश्शबरस्वामिनः कर्त्रधिकरणे इति शेषः। अन्वितावस्थाप्रत्यायनं लक्षणाया—

अत्रेदं बोध्यम्—पदैः पदार्था एवाभिधीयन्ते। अर्थान्तरान्विततया तु लक्ष्यन्ते, अन्यथा पदार्थस्वरूपातिरिक्तविशिष्टार्थाभिधाने गौरवं स्यात्। एवञ्चानन्वितावस्थो ह्यभिहितः पदार्थोऽन्वितावस्थां लक्षयति, अवस्था-अवस्थावतोस्तावत् संबन्धोऽस्त्येव, एकसंबन्धिज्ञानमपरसं-न्धिस्मारकमिति न्यायात्। एवञ्चानधिगतार्थप्रत्यायनप्रयुक्तः समभिव्याहारः अनधिगतमर्थमन्तरेणासंभवन् मुख्यार्थासंभवात् गंगायां घोष इत्यादाविव तदविनाभूता स्वाभिधेयसमवेतामन्वितावस्थां लक्षयति, अन्वितावस्थायाः तत्र तत्र भिन्नत्वादित्यर्थः।

तदुक्तम्। एतच्च नोत्प्रेक्षामात्रमिति भ्रमितव्यम्। महामीमांसकैर्मण्डनमिश्रादिभिरप्यस्य स्वीकृतत्वादित्यर्थः। अर्थस्य विशिष्टेत्यादेरयमर्थः—जनेमध्यमवृद्धे, लोकव्यवहारे वा पदसमभिव्याहृतिरुत्तमवृद्धस्य पदप्रयोगो वा विशिष्टार्थप्रत्यायनप्रयुक्ता इति।

विकः शब्दार्थयोः [1]सम्बन्ध इति स्थितिः ।

स[2] तु किमर्थान्तरान्वितस्यार्थस्य, अर्थरूपमात्रस्य वा, यदापि रूपमात्रमुच्यते पदैः, तदापि किं तन्मात्रपरैः ? आहोस्विदन्वितावस्थाप्रत्यायनपरैः । तत्र रूपमात्रप्रत्यायनपरत्वे पदानां वाक्यार्थप्रत्ययानुपपत्तेः अप्रयोजनस्य [3]प्रयोजनासम्भवादत्यन्तान्धमूकं जगत्प्रसज्येत ।

[4]तदुभयं परिशिष्यते लौकिकपदसन्दर्भस्य, विशिष्टार्थप्रत्यायनप्रयोजनपरस्य । तत्रार्थान्तरान्वयपरस्य स्वार्थमात्राभिधानेऽप्यन्वितप्रतिपत्तेरुपपत्तेरर्थापत्तिपरिक्षयान्नान्वयं यावत्पदस्य सामर्थ्यमनुवर्तनीयम्[5] ।

---

१. सम्बन्ध इति स्थितिः । अस्यायमभिप्रायः—वृद्धव्यवहारपरम्परारूपे शब्दार्थसम्बन्धज्ञानकारणे सति 'अनेन शब्देनायं बोध्यः' इत्युपदेशाभावेऽपि बोधदर्शनात्तत्तदर्थगतभेदप्रतिपादनस्य तत्तद्विषयकज्ञानाकारभेदप्रयुक्तत्वाज्ज्ञानगतवैलक्षण्यस्य विषयतासम्बन्धेन तत्तदर्थरूपतया अर्थभेदात् ज्ञानगतवैलक्षण्यस्य वस्तुतः सत्त्वेऽपि, तस्य बोधविषयत्वाभावेन पदेषु तत्तज्ज्ञानगतवैलक्षण्यनिरूपितशक्तेर्वक्तुमशक्यतया अर्थानामिव तत्तदर्थगतवैलक्षण्यस्यापि वाच्यत्वाङ्गीकारे तावन्मात्रेण शक्त्यैवेतरव्यावृत्ततत्तदर्थविषयकशाब्दधिय उपपादयितुं शक्यतया, अन्वयांशे पदवाच्यताभ्युपगमवैयर्थ्यात्, अर्थगतवैलक्षण्यबोधस्य त्वन्वयप्रयोज्यत्वमात्रेण स्वरूपतोऽर्थभेदात्तद्वैलक्षण्यनिर्वाहकान्वयांशस्यापि वाच्यत्वाभ्युपगमे भिन्नभिन्नार्थबोधकारणीभूतपदप्रत्यक्षकारणपदोच्चारणकुक्षिप्रविष्टताल्वादिव्यापारस्यापि परम्परयेतरव्यावृत्तार्थबोधं प्रत्युपयोगित्वेनानिष्टस्य वाच्यत्वस्यापत्तेः शब्दार्थसम्बन्धः स्वाभाविक एवेति सिद्धान्त इत्यर्थः ।

२. सः—सम्बन्धः इत्यर्थः ।

३. प्रयोजनासम्भवात्—'स्वरूपमात्रतात्पर्यकैः पदैः तात्पर्यविषयस्य संसर्गस्य बोधनीयत्वासम्भवादित्यर्थः ।'

४. उभयम्—'अर्थान्तरान्वितस्यार्थाभिधायकत्वम्, अन्वितावस्थाप्रत्यायनतात्पर्यकत्वं चेत्यर्थः ।

५. सामर्थ्यमनुवर्तनीयम्—'स्वार्थमात्रनिरूपितशक्तिस्वीकारेऽपि

तथाहि—वृद्धप्रयुक्तवाक्यश्रवणसमनन्तरं प्रवृत्ति-निवृत्ति-हर्ष-शोक-भयसम्प्रतिपत्तेः व्युत्पन्नस्य व्युत्पित्सुस्तद्धेतुप्रत्ययमनुमिमीते। तस्य सत्स्वप्यन्येष्वनुपजातस्य पदजातश्रवणसमनन्तरं सम्भवतः [1]तद्धेतुभावमवधारयति। न चैष प्रत्ययः पदार्थमात्रगोचरः, [2]प्रवृत्त्यादिभ्यः कल्प्यत इति विशिष्टार्थगोचरोऽभ्युपेयते। तद्विशिष्टार्थपरता अवसिता वृद्धव्यवहारे पदानाम्। न चेयमविशिष्टार्थस्मरणमन्तरेणेत्यविशिष्टार्थस्मारक[3]त्वं [4]तदुत्पत्त्यैव प्रत्युप्तम्। न चैतदेषां विशिष्टार्थतामुपहन्तुमर्हति। न जातु भावाः स्वनिमित्तमुपघ्नन्ति, मोपघानिषत स्वमपीति। न चैतावता विशिष्टाभिधानम्। अविशिष्टविषयेभ्योऽपि [5]तत्परेभ्यस्तदुपपद्यते। तस्माल्लोकानुसारेण वैदिकस्यापि पदसन्दर्भस्य विशिष्टार्थप्रत्ययप्रयुक्तस्याऽविशिष्टार्थाभिधानमात्रेण [6]लक्षणया विशिष्टार्थगमकत्वम्। स्वार्थमात्रपरत्वे तु

---

पदसमूहस्य विशिष्टार्थबोधतात्पर्यकत्वेऽन्वयप्रतीतेः पदविशेष्यकतात्पर्यज्ञानेनैवोपपत्तेः 'यजेत स्वर्गकामः' इत्यादावपूर्वेऽर्थापत्तिलभ्ये पदानामशक्यार्थान्तर इवान्वयांशेऽपि न सामर्थ्यमङ्गीकार्यमित्यर्थः।

१. तद्धेतुभावम्—तत्कारणकत्वम्। वाक्यकारणकत्वमित्यर्थः।

२. प्रवृत्त्यादिभ्यः कल्प्यते—'प्रवृत्त्यादीनां पदार्थमात्रप्रतीत्या अनुपपत्तेः प्रवृत्त्यादय एव विशिष्टार्थप्रतीत्यनुमापका इति भावः।

३. अविशिष्टार्थस्मारकत्वम्—विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य, विशिष्टवैशिष्ट्यावगाहि बुद्धिं प्रति विशेषणतावच्छेदकधर्मप्रकारकनिश्चयस्य च हेतुत्वात् इति।

४. तदुत्पत्त्यैव प्रत्युप्तम्—विशिष्टविषयकबोधोत्पत्त्यैव पदानां विशिष्टार्थस्मारकत्वमाक्षिप्तमित्यर्थः।

५. तत्परेभ्यस्तदुत्पद्यते—'असंसृष्टस्वार्थमात्रनिरूपिताभिधाख्यवृत्तिविशिष्टेभ्यः पदेभ्यो विशिष्टार्थतात्पर्यकेभ्यस्तात्पर्येणैव संसृष्टार्थप्रतीत्युपपत्तेः संसृष्टनिरूपिता अभिधा न स्वीक्रियत इत्यर्थः।

६. लक्षणया लोके वक्त्रभिप्रायरूपतात्पर्यसम्भवेऽप्यपौरुषेयेषु वैदिकवाक्येषु तदसम्भवाच्छक्त्या पदार्थमात्रोपस्थितावपि लक्षणया संसृष्टार्थबोधजनकत्वमित्यर्थः।

प्रयोजनाभावेन [1]तस्याप्यनुपपत्तेः।

यथाहुरत्रभवन्तो वार्तिककारमिश्राः—

'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्।
वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले॥
वाक्यार्थमितये तेषां [2]प्रवृत्तौ नान्तरीयकम्।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्'॥

तथा— (१-७-३४२-, ३४३) इति॥

'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितिः'। इति च।

[3]अन्वितेऽर्थे तात्पर्याभ्युपगमात् तदभिधायित्वं पदानामिति चेत्, तत्किं 'गङ्गायां घोषः' इत्यत्र गङ्गापदं तीराभिधायि भवेत्, तत्र तात्पर्यात्। [4]न; स्मारितस्वार्थप्रत्यासत्त्यापि तदवगतेर्न तत्परस्यापि तदभिधानमिति यद्युच्येत, तदेतदत्रापि समानमुक्तेन [5]क्रमेण। तस्मादनेकान्तं तात्पर्यं न बीजं [6]सामर्थ्यसाधने। न जातु ज्वलन्ति काष्ठानि [7]पाकपराण्यपि पाके साक्षात्समर्थानि, किन्तु ज्वलन एव, तया द्वारा तत्सिद्धेः।

---

१. तस्याप्यनुपपत्तेः—'तदन्यप्रतीतीच्छयाऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वरूपेण तात्पर्येण युक्तस्य वैदिकपदजातस्य स्वार्थमात्रे प्रदर्शिततात्पर्यस्वीकारे प्रयोजनभूतस्य प्रवृत्त्यादेः स्वरूपमात्रज्ञानेन असम्भवात्प्राक् प्रदर्शितरीत्याऽनुमितिकारणीभूतप्रवृत्त्याद्यभावेन स्वार्थमात्रबोधस्याप्यनुपपत्तेरिति भावः। एवं च स्वरूपमात्राभिधानेन प्रयोजनशून्येन वैदिकपदेषु लक्षणाश्रयणेन संसृष्टबोधाङ्गीकारेऽपि निर्विशेषात्मतत्त्वबोधनेन निखिलप्रपञ्चबाधरूपपरमप्रयोजनसम्पादकेषु महावाक्येषु तत्त्वमस्यादिषु नान्वयांशे लक्षणेति भावः।

२. प्रवृत्तौ नान्तरीयकम्–प्रवृत्ताविति फले निमित्ते सप्तमी। प्रवृत्त्यर्थम्—आश्रितवाक्यार्थबोधार्थम्। नान्तरीयकम्—प्रदर्शितदिशा आवश्यकमित्यर्थः। ३. (अन्वितेऽर्थे)—'शक्यविषयस्यापि तात्पर्यविषयत्वमात्रेण बोधाभ्युपगमेऽतिप्रसङ्गं मन्यमानः शङ्कते' इति।

४. 'न अभिधायकत्वं तस्येष्टमिति शेषः। ५. उक्तेन क्रमेण—'लक्षणायापि विशिष्टधीसम्भवात्' इति भावः।

६. सामर्थ्यसाधने—'शक्तिसाधने' इत्यर्थः। ७. (पाकपराण्यपि) 'पाकसम्पादकान्यपि। पाकेच्छयोपात्तान्यपि इति यावत्।

तेषामतुल्यकक्ष्याणां प्राथम्यं न विशेषायोपयुज्यते,—येन पदानां तदर्थेभ्यः प्राथम्येनान्वितार्थधियं प्रति [1]सामर्थ्यं कल्प्येत। दर्शिता त्वतुल्यकक्ष्यता, रूपमात्राभिधानात्, अन्विताभिधाने गौरवात्।

## गौरवशंका तन्निरासश्च

न च पदार्थानामुपलभ्यमानाकाङ्क्षादिसहकारिणां विशिष्टार्थधीजन्मनि सामर्थ्यमपरं कल्पनीयम्[2]। तेभ्य एव तादृग्भ्यस्तदुत्पत्तेरुपपत्तेः। न चैते मानान्तरदृष्टा अर्था न विशिष्टार्थबुद्धेरीशते। तथा हि—यत एवानुमानभावम्, अर्थापत्तिभावं वा समापन्ना दृष्टा विशिष्टार्थधियमादधाना यथा, तथा आधास्यन्ति, तामेव तत्परैः स्मारिताः सन्तः शब्द[3]त्वमापन्नाः। [4]अनुपपत्तिसम्बन्धमात्रप्रभावितं च तात्पर्यमुपपादके न शक्तिमपेक्षते। गङ्गादिपदानां च काष्ठादीनां च तीरादौ पाकादौ च कल्पनाप्रसङ्गादित्युक्तम्।

## लक्षणाया नियामककथनम्

न[5] च सर्वत्र स्वार्थपरित्यागेनैव लक्षणेत्यैकान्तिकम्। लक्षणीयानुरोधेनैव हि सर्वत्र परिग्रह-परित्यागौ। तद्यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदेन घोषप्रतिवासार्हतीरलक्षणया स्वार्थस्य गङ्गायास्त्यागः, 'दण्डिनो गच्छन्ति' इत्यत्र तु दण्डयद्दण्डिषु समूहिषु

---

१. सामर्थ्यं कल्प्येत—'अन्यथाप्युपपद्यमानानां विशिष्टज्ञानानां प्रवृत्त्यादिहेतुकानुमितिप्राथमिकविषयत्वं शक्त्यनुमापने न पर्याप्तमित्यर्थः।

२. अपरं कल्पनीयम्—'प्रत्यक्षादिनाऽवगतानां श्वैत्य-खुरनिष्पेषशब्दश्रवणादीनां विशिष्टार्थबोधजनकत्वस्य प्रागुपपादितत्वात्तथैव पदैरुपस्थितानां अप्यर्थानामविशिष्टानुभवजनकत्वाभ्युपगमे कारणत्वकल्पनाधिक्यं नेति भावः।

३. शब्दत्वम्—'शब्दोपस्थितत्वप्रकारकानुसन्धानविषयत्वमित्यर्थः।

४. अनुपपत्तिसम्बन्ध ... शक्तिमपेक्षते—'पदार्थस्वरूपमात्रेऽनुपपत्त्या सम्बन्धेन प्रतियोगित्वादिना च केवलमुपपादितं वाक्यार्थसंसर्गनिरूपितं तात्पर्यं पदशक्तेर्गमकं न, तामन्तराप्युपपत्तेरित्यर्थः।

५. 'अन्वयांशे लक्षणामसहमानः शङ्कते 'न च सर्वत्र' इति।

लक्ष्यमाणेषु तदन्तर्गतस्याविशेषात् दण्डशब्दार्थस्य परिग्रहः। तथा वेदे 'सृष्टीरुपदधाति' इत्यत्र 'गणिकानां लक्ष्यमाणत्वे तदन्तर्गतस्यापि सृष्ट्यर्थस्य परिग्रहः, एवमिहापि व्यतिषक्तदशायां लक्ष्यमाणायां तदन्तर्गतस्यापि परिग्रहः, तदग्रहे [2]लक्ष्यमाणपरित्यागप्रसङ्गात्। [3]लक्षणालक्षणायोगात्, अलक्षणेति चेत्? न। [4]अलक्षणत्वात्।

## अन्विताभिधानवादिनश्शंका

तत्रैतत्स्यात्—नेयं लक्षणा, सा किलाभिधेयस्यार्थस्यायोग्यतया अनुपपद्यमाने वाक्यार्थसम्बन्धे सति तत्सम्बन्धलब्धबुद्धिसन्निधौ वाक्यार्थसम्बन्धार्हे भवत्यर्थान्तरे। तथाऽऽह कश्चित्—

'वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणेष्यते ॥'(प्र॰पं॰पृ॰ ४३०)

न च 'ओदनं पचति चैत्रः पिठरे' इत्यादौ चैत्रपिठरादीनामर्थानां वाक्यार्थे सम्बन्धानर्हत्वम्। न च तल्लक्षिताया अन्विताबस्थाया-अन्वयान्तरशालिता। न चैवं लक्षणा, [5]तल्लक्षणविरहात्-इति।

## तन्निरासः

तत्किमिदानीं न लक्षणेयमिति.नान्यलभ्यस्यापि शब्दार्थत्वमस्तु। न हि 'मासमग्निहोत्रं, जुह्वति' इत्यत्राग्निहोत्रपदं अलाक्षणिकमिति-

---

१. गणिकानाम्—'तद्गणपठितानां सृष्टिशब्दरहितानामपि। अयमर्थः शाबरभाष्ये (१-४-२७) स्पष्टः।

२. लक्ष्यमाणपरित्यागप्रसङ्गात्—संसर्गिणः पदार्थस्य परित्यागे संसर्गमात्रप्रतीतेर्निष्प्रयोजनत्वेन संसर्गस्यापि परित्यागप्रसङ्गात् इत्यर्थः।

३.लक्षणालक्षणायोगात्—वक्ष्यमाणस्वार्थान्यपदार्थबोधकत्वघटित-लक्षणालक्षणस्य स्वार्थसम्बन्धेऽभावादित्यर्थः।

४. अलक्षणत्वात्-'वक्ष्यमाणस्य लक्षणालक्षणस्य प्रदर्शयिष्यमाण-दूषणेनाव्यापकत्वादित्यर्थः।'

५. तल्लक्षणविरहादिति—'लक्षणयोपस्थिततीरादेः पश्चाद्बोधविषयत्वमिव प्रकृते लक्षितेन संसृष्टस्वार्थरूपेण प्रयोजनसिद्धेः पुनरन्वयान्तरस्यानुपयोगादनवस्थाप्रसङ्गाच्चेति भावः।

मुख्यं भवति। कर्मान्तरसादृश्येन गौण्या वृत्त्या तत्र प्रवृत्त्युपपत्तेर्न तदभिधानशक्तिकल्पनेति चेत्? इहाप्युन्नीतया नीत्या अन्तरेणाप्यभिधानसामर्थ्यमन्वितावस्थाप्रतीत्युपपत्तेः कृतमभिधानशक्तितः। एवं च न चेदियं पदप्रवृत्तिर्लक्षणालक्षणमन्वेति। भवतु तर्हि चतुर्थी, दृष्टत्वात्। अस्तु वा लक्षणैव। नो खल्वेतल्लक्षणम्, अप्रसिद्धवृत्त्यन्तरावतारप्रसङ्गात्। तस्मादेतद्वक्तव्यम्।

## शालिकोक्ते लक्षणे अनिष्टपदनिरासेनेष्टपदपरिग्रहः।

तदिदमुच्यते—'मृष्यामहे वाच्यानुपपत्तितः' इति, 'सम्बन्धवशप्राप्तस्य' इति च, न पुनः 'वाक्यार्थे सम्बन्धे' ति च 'अन्वयात्' इति च। अस्ति चेहापि लोकानुसारतो विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतीनामर्थरूपमात्रपरत्वे पदानामनुपपत्तिः। अर्थरूपसम्बन्धवशप्राप्तता[1] चान्वितावस्थायाः। व्यापकं चैतल्लक्षणं लक्षणानामनवयवेन[2] वैदिकानां च लौकिकानां चेति चतुरस्रम्।

अभिधावृत्तित्वं च पदानां रूपमात्रप्रज्ञापनेऽपि न तेनोपपद्यते[3]।

## शंका-समाधाने

अपि नाम पदानि साक्षाद् व्यापारेण बोधयन्त्यर्थान्, वाक्यार्थमितये तद्बोधनमिति वाक्यार्थं लक्षयिष्यन्ति। तदवस्थाभेदस्य तैः सहादृष्टचरत्वेन बुद्धावसन्निधानादलक्षणेति, चेत्? न। सामान्यतो[4] दर्शनात्, पदार्थानामेव तद्विशेषकत्वात्। न खल्वन्वितेभ्यः पदार्थेभ्यो अन्योऽन्वि[5]तावस्थाविशेषः। तथा चार्थस्वरूपबोधनसामर्थ्यान्नाधिकं

---

१. अर्थरूपसम्बन्धवशप्राप्तता—'अर्थसम्बन्धवशप्राप्ते' ति २ पु. पा.।

२. अनवयवेन—'साकल्येन' इत्यर्थः।

३. न तेनोपपद्यते—'स्वरूपमात्रोपस्थापनेन न परिसमाप्यते, प्रयोजनवैकल्यात्,इति भावः। ४. सामान्यतः अलक्षणनिवेशेन सामान्यत इति २ पु. पा.।

५. अन्वितावस्थाविशेषः 'तथा चेतरपदार्थान्वयेन विशेषरूपतामापन्नः संसृष्टोऽर्थः सामान्यविशेषभावसम्बन्धेन स्वरूपसम्बन्धीति तत्र लक्षणा युज्यते' इति भावः।

सामर्थ्यद्वयं[1] कल्पयिष्यते। नाप्यभिधानशक्तेरेवान्वयविषयत्वम्, अर्थस्वरूपमात्रगोचरत्वेऽपि तत्प्रतीत्युपपत्तेः।

यदि पुनः प्रमाण-संशय-विपर्ययेभ्यो विधान्तरानुपगमान्न पदार्थबोधः[3] शब्दव्यापारजन्योपेयते, तर्हि स्मृतिरस्तु, न त्वेषा संस्कारोन्मेषमात्रप्रभवेति कृतमभिधातृभावेन पदा[4]नाम्। तदुन्मेषे तदुपयोगः इति चेत्? हन्त! अर्थोऽप्यालोचितः स्वपदगोचरसंस्कारोद्बोधहेतुरिति, सोऽपि पदस्याभिधाता स्यात्। तदिदमनभिधातृत्वमधिगतान्वयबोध एव कल्प्यते पदानाम्, नान्यथा[5]।

अथैवंवादी पृष्टो व्याचष्टाम् को नु खल्वयमभिधाव्यापारः शब्दानाम्, येनामी तद्वन्तोऽन्वयस्याभिधातारः। न तावत्परिस्पन्दः, तस्य मूर्तानुविधायिनो द्रव्ये विभुनि, विभुगुणे वा शब्दे मूर्त्यभावेनासम्भवात्। 'असर्वगतद्रव्यपरिमाणं मूर्तिः' इति हि पदार्थविदः[6]। नाप्यस्पन्दात्मा प्रयत्नादिरिवादृश्यमानः, प्रमाणाभावात्। अन्वयधियश्च कार्यस्य सति सङ्गतिसंवेदने [7]शब्दनिश्चयज्ञानादेवोत्पत्तेः। तस्मात्स्वगोचरं विज्ञानमेव शब्दानां व्यापारः स्वार्थबोधे। यथा आह भगवान् भाष्यकारः "शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्" (शा० भा० पृ० ३७) इति।

---

१. सामर्थ्यद्वयम्—'प्रागुक्तं पदानामन्वयानुभवसामर्थ्यम्—अर्थस्वरूपाणां अन्वयानुभवसामर्थ्यं च। आद्यस्यान्यथाप्युपपद्यमानत्वादन्त्यस्य क्लृप्तत्वाच्चेति भावः'।

२. विधान्तर—'विधानान्तरेति २ पु.पा.। ३. पदार्थबोधः—'पदार्थानुभवः' इति। ४. पदानाम्—'पदानामभिधातृत्वेन पर्याप्तम्, तावन्मात्रेण प्रयोजनसिद्धेरिति भावः। 'युगपर्याप्तयोः कृतम्' इत्यमरः।

५. नान्यथा—'अर्थवादादिवाक्येषु प्राशस्त्यादेरशक्यत्वेऽपि संसर्गस्य प्राथमिकशक्तिग्रहकालेऽवगतत्वात्संसर्गत्वेन संसर्गस्य शक्यतेति भावः।

६. पदार्थविदः-'वैशेषिकदर्शनप्रशस्तपादभाष्यटीकायामुदयनाचार्यकृतायां किरणावल्यां साधर्म्यप्रकरणे' इति।

७. शब्दनिश्चयज्ञानादेवोत्पत्तेः—'शब्दजन्यस्वार्थनिश्चयेनैवान्वयधिय उपपन्नत्वात् व्यापारान्तरकल्पना अनुचितेति भावः।

## अभिधास्वरूपवर्णनम्

[1]स एव स्वाभाविकशक्तिशालिनः शब्दस्य स्वशक्त्या अर्थधीहेतुतया अभिधेति गीयते। शब्दाभासस्यैन्द्रियकत्वेऽपि रूपतः सामर्थ्योपधानेनाभिधात्वात्तस्य चातीन्द्रियत्वादतीन्द्रियत्वमास्थिषताभिधायाः[2]। न चेयं साक्षादर्थधियमाधत्ते, येन न तत्साधिका स्यात्; अपितु संस्कारोद्बोधनक्रमेण।

तथा च नार्थविषयज्ञानं स्वपदगोचरसंस्कारोद्बोधनक्रमेण पदस्मरणमपि विदधदभिधाशब्दगोचरः। अपि तु शब्दविषयं विज्ञानम्, तस्य च[3]तद्भावनियमात्-लौकिकपरीक्षकाणां प्रयोगसंप्रतिपत्तेः।

प्रणिधानादिष्वपाठाच्छब्दस्य न स्मारकत्वमिति चेत्? न! तत्सम्बन्धात्। अथापि[4] स्यात्, परिगणिता हि स्मृतिहेतवः—'प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मा: निमित्तेभ्यः' इतिसूत्रेण (न्या०द०३-२-४१) [5]प्रामाणिकैः।

न चैतेषु किञ्चित्पदं तत्रार्थस्य स्मारकमिति चेत्? तन्न। अर्थसम्बन्धेन तदुपपत्तेः। सम्बन्धो हि स्मृतिहेतुषु पठितः, यतोऽन्ते-

---

१. स एव—'स्वविषयकज्ञानरूपव्यापार एवेत्यर्थः।

२. अभिधायाः–'शब्दगताभिधाया अर्थबोधानुकूलसामर्थ्यरूपायाः कुक्षौ प्रविष्टस्यार्थस्यातीन्द्रियत्वेन तद्विशेषितसामर्थ्यस्याप्यतीन्द्रियत्वमाश्रीयत इत्यर्थः।

३. तद्भावनियमात्—'शब्दविषयकज्ञानेन नियमतोऽर्थप्रत्ययस्यैवार्थज्ञानेन पदस्मरणनियमाभावादर्थगतक्वाचित्कपदोपस्थापकव्यापारस्य नाभिधात्वम्, नियमेनोपस्थापकव्यापारस्यैवाभिधात्वादिति भावः।

४. शब्दस्य अथापि स्यात्–'शब्दस्य तत्स्मारकत्वमिति चेन्न। तत्सङ्गात' इति २ पु. पा.। 'अथापि' इत्यत्र 'तथापीति च' इति।

५. कस्य स्मृति रुत्पद्यत इति चेत्, उच्यते, एतेभ्यः स्मृतिर्भवतीति सूत्रार्थः।

सनो गुरु ऋत्विजो याज्यं [1]स्मारयन्ति। स–चास्ति शब्दार्थयोरौत्पत्तिको वाच्यवाचकभाव इति तदनुभवाहितभावनासहितं शब्दविज्ञानमन्वितार्थप्रत्यायनप्रयुक्तं स्वार्थं स्मारयिष्यति। वाच्यवाचकत्वञ्च प्रत्याय्य-प्रत्यायकत्वम् तच्च विचार्यमाणं स्मार्यस्मारकत्वमेव[2]।

## दृष्टान्त-दार्ष्टान्तिकवैलक्षण्येन प्रत्यवस्थानम्।

ननु सम्बन्धान्तरेणाध्यापकाध्यापनीयभावादिना अन्तेवासी स्मरति गुरुम्, न स्मारकत्वेनैव। तथैवेहापि सम्बन्धान्तरमनुसर्तव्यम्। न च तदस्ति, तत्कथमस्य स्मारकत्वम्, अन्विताभिधाने त्वभिधेयसाहचर्यमेवास्यास्ति सम्बन्धान्तरमिति, युज्यते स्मारकत्वम् पदानाम्।

## तन्निरासः

अथाऽन्विताभिधानेऽप्यन्वितप्रत्यायनाय[3] किमस्ति सम्बन्धान्तरं पदानाम्। दृष्टा हि चक्षुरादयो धूमादयश्चार्थसन्निकर्षलक्षणनियतसाहित्यादिलक्षणेन सम्बन्धान्तरेण प्रत्याययन्तो यथायथमर्थान्।

यद्युच्येत विनापि सम्बन्धान्तरमौत्पत्तिकार्थप्रत्यायनशक्त्या वृद्धव्यवहारोन्नीतया प्रत्यायनमिति, तदत्रापि समानम्। इहापि तादृशस्यैव स्मृतिजननशक्त्या वृद्धव्यवहारोन्नीतया स्मारकत्वमस्तु पदानामर्थरूपे, तच्च स्वज्ञानमेव, तस्य चाभिधात्वमुपपादितमधस्तात्।

## भाट्टमतेन सिद्धान्तस्योपसंहारः

तस्मादभिधातृत्वमपि[4] नान्विताभिधान इति, कल्पनालाघवादाकाङ्क्षादिलक्षणसहकारिप्रत्यासन्नैश्च समभिव्याहृतपदस्मारितैः

---

१. स्मरन्ति—२ पु. पा.।

२. स्मारकत्वेनैव–'स्मार्यस्मारकत्वेनैवेति २. पु. पा.।

३. अन्वितप्रत्यायनाय–'अन्वितानुभवनिष्पत्तये। सामान्यतोऽन्वितस्योपस्थितत्वेनानुभवविषयताया असम्भवाद्विशेषस्य च सामान्यादभिन्नत्वेन सम्बन्धान्तरानुपपत्तेरिति भावः।'

४. नान्विताभिधान इति–'अन्विताभिधानवादे प्रदर्शितदिशा पदानामन्विताभिधातृत्वं न सिद्ध्यतीत्यर्थः।

पदार्थैः प्रत्यासत्त्या गम्यमानो 'वाक्यार्थो लाक्षणिकः, शाब्दश्चेति रमणीयम् ।

तस्मात् सुष्ठूक्तम्—'पदानि हि स्वां स्वमर्थमभिधाय निवृत्तव्यापाराणि । अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थं गमयन्ति' (शा. भा. १।१।२५) इति ॥

तत्त्वबिन्दुपरामर्शपुष्टानां बुद्धिवीरुधः ।
वाक्यार्थधीसुमनसः पुरुषार्थफलप्रदाः ॥१२॥
वाक्यार्थमितये पुंसां भ्रमसन्तमसच्छिदा ।
इन्दुनेवामुना मार्गो दर्शितस्तत्त्वबिन्दुना ॥१३॥

इति श्रीमदाचार्यश्रीवाचस्पतिमिश्रविरचितः
तत्त्वबिन्दुः समाप्तः

---

१. वाक्यार्थो लाक्षणिकः शाब्दश्चेति—'संसर्गो लक्षणागम्यः स्वज्ञानादिपरम्परया पदजनितत्वेन शाब्दश्चेत्यर्थः ।'

व्याख्यादिवादसंजातव्यामोहविनिवृत्तये ।
तं शिष्यसुखबोधाय सुब्रह्मण्यो व्यवर्वरीत् ॥

स्फोटेऽथ वाक्यचरमाक्षरसर्ववर्णा-
वल्योः पदेषु च निरस्यमथानवेन ॥
संस्मारितेष्विह हि वस्तुषु सुप्तिङन्तैः
शाब्दप्रमाजनकता निरधारि मिश्रैः ॥

गंगाधरीया टिप्पणी समाप्ता

———

# तत्त्वबिन्दोरशुद्धिपत्रम्

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | १० | त्रयीविदः | त्रैविदाः |
| ३ | २ | अस्य | अस्याः |
| ५ | १ | अय | अर्थं |
| ८ | १ | जन्यतया | जन्मतया |
| १० | ११ | सयम् | सेयम् |
| २१ | १० | वर | वरम् |
| २८ | ६. | तदाहु | तदाहुः |
| २९ | ३ | आधते | आधत्ते |
| ११ | ७ | नक्षरावन्तिः | नाक्षरावलिः |
| ३१ | १ | तथाहि | तथा सति |
| | | अष्टमपंक्तौ | अपिचेतिपठितव्यं |
| | | अदृश्यमान | अविमृश्य- |
| | | सुन्दरम् | मानसुन्दरम् |
| | | मतरेषां | मितरेषाम् |
| ३९ | १२ | अनवगमाद्वाम | अनवगमाद्वा |
| ४१ | १३ | पदानां | तत्सामर्थ्याधानसामर्थ्यमिति |
| ४४ | ११ | लक्षीरिति | संपातायातम् |
| ४७ | ४ | प्रतीति | प्रतीतिः |
| ४८ | १५ | समभिव्याहार | समभिव्याहारः |
| ४९ | १६ | ननः | मनः इति |
| ५० | ७ | विप्रतिपद्यन्ते | न विप्रतिपद्यन्ते |
| ,, | १० | उपायम् | उपायान् |
| ५३ | २२ | नोपगता | नांगता |

| | | | |
|---|---|---|---|
| ५३ | २३ | शब्दरूपाणां | अशब्दरूपाणाम् |
| | ,, | साक्षात् | नसाक्षात् |
| ५४ | १६ | आपतत | आयतते |
| ,, | २८ | अर्थस्येति | संपातायातम् |
| ५६ | १६ | मितिनान्य | मित्यनन्य |
| ६१ | ४ | जन्योपेयते | जन्मोपेयते |
| ,, | ८ | येनामी | येन अमी |
| ६२ | १ | अन्तेवसनो | अन्येवासीगुरं |
| ६४ | ४ | सनतो | सन्तः |
| ,, | १४ | दिवाद | विवाद |

इतितत्त्वविन्दोश्शुद्धिपत्रं समाप्तम्

— * —

